## षड्विंशः सर्गः

---

मुनेर्वचनमक्लीवं श्रुत्वा नरवरात्मजः ।
राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच दृढव्रतः ॥ १ ॥
पितुर्वचननिर्देशात्पितुर्वचनगौरवात् ।
वचनं कौशिकस्येति कर्तव्यमविशङ्कया ॥ २ ॥
अनुशिष्टोऽस्म्ययोध्यायां गुरुमध्ये महात्मना ।
पित्रा दशरथेनाहं नावज्ञेयं हि तद्वचः ॥ ३ ॥
सोऽहं पितुर्वचः श्रुत्वा शासनाद्ब्रह्मवादिनः ।
करिष्यामि न सन्देहस्ताटकावधमुत्तमम् ॥ ४ ॥

---

मुनेरिति अक्लीवं स्पष्टम् ॥ १ पितुरिति कौशिकस्य वचनं अविशङ्कया कर्तव्यं त्वयेत्येवं रूपान्निर्देशात् नियोगात् पितुर्वचनगौरवात् परमाप्तवाक्यत्वेन अति प्रमाणत्वात् त्वद्वचनं अवश्यं कर्तव्यत्वेन निश्चितमिति शेषः ॥ २ ॥

क्वैवं नियोगः कृत इत्यत आह अन्विति गुरवो वसिष्ठवामदेवाद्या[illegible] [illegible]मानेतवत्स एव तद्वचो विश्वामित्रवच इत्यनुशिष्ट इत्यन्वयः ॥ ३ ॥

सोऽहमिति ब्रह्मवादिनस्तस्य पापस्पर्शेन तत्सङ्कल्पादन्यस्यापि पापमपापं पुण्यं चेत्याह उत्तममिति उत्कृष्टधर्ममित्यर्थः ॥ ४ ॥

गोब्राह्मणहितार्थाय देशस्य च हिताय च ।
तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः ॥ ५ ॥
एवमुक्त्वा धनुर्मध्ये बद्ध्वा मुष्टिमरिन्दमः ।
ज्याघोषमकरोत्तीव्रं दिशः शब्देन नादयन् ॥ ६ ॥
तेन शब्देन वित्रस्तास्ताटका वनवासिनः ।
ताटका च सुसंक्रुद्धा तेन शब्देन मोहिता ॥ ७ ॥
तं शब्दमभिनिध्याय राक्षसी क्रोधमूर्च्छिता ।
श्रुत्वा चाभ्यद्रवत् क्रुद्धा यत्र शब्दो विनिःसृतः ॥ ८ ॥
तां दृष्ट्वा राघवः क्रुद्धां विकृतां विकृताननाम् ।
प्रमाणेनातिवृद्धां च लक्ष्मणं सोऽभ्यभाषत ॥ ९ ॥
पश्य लक्ष्मण ! यक्षिण्या भैरवं दारुणं वपुः ।
भिद्येरन् दर्शनादस्या भीरूणां हृदयानि च ॥१०॥
एतां पश्य दुराधर्षां मायाबलसमन्विताम् ।
विनिवृत्तां करोम्यद्य हृतकर्णाग्रनासिकाम् ॥ ११ ॥

---

पुनस्तदेवोपपादयति गोब्राह्मणेति अप्रमेयस्य तव च हिताय अस्य हितं स्वाज्ञापरिपालने न सन्तोषरूपं इदमावर्तते तव वचनं कर्तुमुद्यतो विचिकित्सारहितोऽहं ताटकावधं करिष्यामीति पूर्वेणान्वयः ॥ ५ ॥

तीव्रं परुषश्रवणम् ॥ ६ ॥ वित्रस्ताः भीताः मोहिता व्याकुलचित्ता जाता ॥ ७ ॥

तं शब्दं श्रुत्वा च क्रुद्धा स शब्दो यत्र यतो विनिःसृतस्तमभिनिध्याय शब्दनिःसरणावधि देशं लक्षीकृत्य अभ्यद्रवदिति योजना ॥ ८ ॥

प्रमाणेन शरीरप्रमाणेन ॥ ९ ॥ भैरवं भयङ्करं दारुणं घोरं अस्य वपुषः चोप्यर्थः अभीरूणामपीत्यर्थः ॥ १० ॥

एतामिति विनिवृत्तां अस्मत् सकाशागमनात् परावृत्तां पलायितामिति यावत् ॥ ११ ॥

न ह्येनामुत्सहे हन्तुं स्त्रीस्वभावेन रक्षिताम् ।
वीर्यं चास्या गतिं चैव हन्यामिति हि मे मतिः ॥१२॥
एवं ब्रुवाणे रामे तु ताटका क्रोधमूर्च्छिता ।
उद्यम्य बाहुं गर्जन्ती राममेवाभ्यधावत ॥ १३ ॥
विश्वामित्रस्तु ब्रह्मर्षिर्हुङ्कारेणाभिभर्त्स्य ताम् ।
स्वस्ति राघवयोरस्तु जयं चैवाभ्यभाषत ॥ १४ ॥
उद्धून्वाना रजो घोरं ताटका राघवावुभौ ।
रजोमेघेन महता मुहूर्तं सा व्यमोहयत् ॥ १५ ॥
ततो मायां समास्थाय शिलावर्षेण राघवौ ।
अवाकिरत् सुमहता ततश्चुक्रोध राघवः ॥ १६ ॥
शिलावर्षं महत्तस्याः शरवर्षेण राघवः ।
प्रतिवार्योपधावन्त्याः करौ चिच्छेद पत्रिभिः ॥१७॥
ततश्छिन्नभुजां श्रान्तामभ्याशे परिगर्जतीम् ।
सौमित्रिरकरोत्क्रोधाद्धृतकर्णाग्रनासिकाम् ॥ १८॥

---

कर्णादिकरणमात्रे हेतुमाह नह्येनामिति वीर्यं परपराभवशक्तिं गतिं आकाशादिगतिं पाणिपादच्छेदेनेति शेषः तावतैव दैन्यक्षितस्य गुरुवचना-दुत्थानस्य च सिद्धत्वात् गुरुविगर्हितः स्त्रीवधोऽनुचित इति भावः ॥ १२ ॥

राममेव विश्वामित्रस्य दुर्धर्षत्वेन तं विसृज्य मानुषबुद्ध्या राम-मेवेत्यर्थः ॥ १२ ॥

तां रामसम्मुखमभिधावतीं जयश्च जयविषयकाशीश्च ॥ १४ ॥

घोरं रजः उद्धून्वानेत्यन्वयः रजोमेघेन रजोऽन्धकारेण ॥ १५ ॥

मायां समास्थाय अन्तर्धानं गत्वेति यावत् चुक्रोध स्त्रीत्वप्रयुक्ता-दाक्षिण्यं विसृज्येति शेषः ॥ १६ ॥

पत्रिभिरिति एकैकस्य बहुधा खण्डनाभिप्रायेण ॥ १७ ॥

हृते कर्णाग्रे नासिका च यस्यास्ताम् ॥ १८ ॥

कामरूपधरा सा तु कृत्वा रूपाण्यनेकशः ।
अन्तर्धानं गता यक्षी मोहयन्ती स्वमायया ॥ १९ ॥
अश्मवर्षं विमुञ्चन्ती भैरवं विचचार सा ।
ततस्तावश्मवर्षेण कीर्यमाणौ समन्ततः ॥ २० ॥
दृष्ट्वा गाधिसुतः श्रीमानिदं वचनमब्रवीत् ।
अलं ते घृणया राम ! पापैषा दुष्टचारिणी ॥ २१ ॥
यज्ञविघ्नकरी यक्षी पुरा वर्धेत मायया ।
वध्यतां तावदेवैषा पुरा सन्ध्या प्रवर्तते ॥ २२ ॥
रक्षांसि सन्ध्याकाले तु दुर्धर्षाणि भवन्ति हि ।
इत्युक्तः स तु तां यक्षीमश्म वृष्ट्याभिवर्षिणीम् ॥२३॥
दर्शयन् शब्दवेधित्वं तां रुरोध ससायकैः ।
सा रुद्धा बाणजालेन माया बलसमन्विता ॥ २४ ॥
अभिदुद्राव काकुत्स्थं लक्ष्मणं च विनेदुषी ।
तामापतन्तीं वेगेन विक्रान्तामशनीमिव ॥ २५ ॥

---

अनेकशःरूपाणि कृत्वा अन्तर्धानं गता सती स्वमायया राघवौ मोहयन्ती ॥ १९ ॥

भैरवं अश्मवर्षमित्यन्वयः ॥ २० ॥

घृणया अलं स्त्री इति घृणा मास्त्वित्यर्थः दुष्टचारिणी मायायन्त्रा अन्तर्धानेन पाषाणादिवृष्टिकर्त्री अतो घृणा अनुचिता ॥ २१ ॥

घृणानोचितेत्यत्र हेत्वन्तरमाह । यज्ञविघ्नकरीति मायया पुरा यावद्वर्धेत तावत्तत्कालात्पुरैव पूर्वमेव एषा वध्यतां सायंसन्ध्यापुरा प्रवर्त्तते प्रवर्त्तयिष्यत इत्यर्थः ॥ २२ ॥

किन्तत्र इत्याह रक्षांसीति अश्मवृष्ट्येति करणे तृतीया ॥ २३ ॥

शब्दमात्रेण लक्ष्यं सम्यङ्निश्चित्य वेधकर्तृत्वसामर्थ्यं दर्शयन्नित्यर्थः ॥२४॥

अभिदुद्रावेति अन्तर्धानं हित्वेति शेषः ॥ २५ ॥

शरेणोरसि विव्याध पपात च ममार च ।
तां हतां भीमसङ्काशां दृष्ट्वा सुरपतिस्तदा ॥ २६ ॥
साधु साध्विति काकुत्स्थं सुराश्चाप्यभि पूजयन् ।
उवाच परमप्रीतः सहस्राक्षः पुरन्दरः ॥ २७ ॥
सुराश्च सर्वे संहृष्टा विश्वामित्रमथाब्रुवन् ।
मुने कौशिक ! भद्रन्ते सेन्द्राः सर्वे मरुद्गणाः ॥२८॥
तोषिताः कर्मणाऽनेन स्नेहं दर्शय राघवे ।
प्रजापतेः कृशाश्वस्य पुत्रान् सत्यपराक्रमान् ॥२९॥
तपोबलभृतो ब्रह्मन् ! राघवाय निवेदय ।
पात्रभूतश्च ते ब्रह्मंस्तवानुगमने रतः ॥ ३० ॥
कर्तव्यं सुमहत्कर्म सुराणां राजसूनुना ।
एवमुक्त्वा सुराः सर्वे जग्मुर्हृष्टा विहायसम् ॥ ३१ ॥
विश्वामित्रं पूजयन्तस्ततः सन्ध्या प्रवर्तते ।
ततो मुनिवरः प्रीतस्ताटकावध तोषितः ॥ ३२ ॥

---

भीमसंकाशां भीमरूपाम् ॥ २६ ॥

अभिपूजयन् अडभाव आर्षः सहस्राक्षः विश्वामित्रमुवाचेत्यन्वयः॥२७॥

[illegible]मुक्तवन्तस्ताटाह मुने इति ॥ २८ ॥

तोषितावयमिति शेषः । अनेन कर्मणा त्वत्प्रवर्तित ताटका-वधरूपेण स्नेहं दर्शय मदीयोऽयमाप्तः शिष्य इति स्नेहमूलं व्यापारं प्रवर्तय तमेव व्यापारमाह प्रजापतेरिति ॥ २९ ॥

तपसा ध्यानेन बलेन च भृतः पूर्णः ते तव रामश्च पात्रभूतश्च राघवः अतस्तस्मै कृशाश्व पुत्रान्निवेदय तथा अस्मानमेवास्माणां कार्य-क्षमत्वमिति भावः अनुगमने शुश्रूषणे दृढनिश्चयः ॥ ३० ॥ ३१ ॥

मूर्ध्नि राममुपाघ्राय इदं वचनमब्रवीत् ।
इहाद्य रजनीं राम ! वसाम शुभदर्शन ! ॥ २३ ॥
श्वः प्रभाते गमिष्यामस्तदाश्रमपदं मम ।
विश्वामित्रवचः श्रुत्वा हृष्टो दशरथात्मजः ॥ २४ ॥
उवास रजनीं तत्र ताटकाया वने सुखम् ।
मुक्तशापं वनं तच्च तस्मिन्नेव तदाहनि ।
रमणीयं विबभ्राज यथा चैत्ररथं वनम् ॥ २५ ॥
निहत्य तां यक्षसुतां स रामः प्रशस्यमानः सुरसिद्धसङ्घैः ।
उवास तस्मिन् मुनिना सहैव प्रभातवेलां प्रति बोध्यमानः२६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बाल-
काण्डे षड्विंशः सर्गः ॥ २६ ॥

---

## सप्तविंशः सर्गः ।

अथ तां रजनीमुष्य विश्वामित्रो महायशाः ।
प्रहस्य राघवं वाक्यमुवाच मधुरस्वरम् ॥ १ ॥

---

पूजयन्तस्तुवन्तो जग्मुरित्यन्वयः प्रवर्तते इत्यस्य स्मेति शेषः ॥२२॥२३॥२४

मुक्तशापं अपगतोपद्रवं यद्वा लब्धशापया ताटकया मुक्तम् ॥२५॥

प्रभातवेलां प्रति बोध्यमान इति विश्वामित्रेणेत्यादि जनागारेति शेषः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदि-
काव्ये बालकाण्डे षड्विंशः सर्गः ॥ २६ ॥

अथेति उष्येति आर्षं प्रहस्य विजयशालि राम दर्शनजबन्तो-
षजो हासः ॥ १ ॥

परितुष्टोऽस्मि भद्रन्ते राजपुत्र महायशः ।
प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः ॥ २ ॥
देवासुरगणान् वापि सगन्धर्वोरगान् भुवि ।
यैरमित्रान् प्रसह्याजौ वशीकृत्य जयिष्यसि ॥ ३ ॥
तानि दिव्यानि भद्रन्ते ददाम्यस्त्राणि सर्वशः ।
दण्डचक्रं महद्दिव्यं तव दास्यामि राघव ! ॥ ४ ॥
धर्मचक्रं ततो वीर ! कालचक्रं तथैव च ।
विष्णुचक्रं तथात्युग्रमैन्द्रं चक्रं तथैव च ॥ ५ ॥
वज्रमस्त्रं नरश्रेष्ठ शैवं शूलवरं तथा ।
अस्त्रं ब्रह्मशिरश्चैव ऐषीकमपि राघव ! ॥ ६ ॥
ददामि ते महाबाहो ! ब्राह्ममस्त्रमनुत्तमम् ।
गदे द्वे चैव काकुत्स्थ ! मोदकी शिखरी शुभे ॥ ७ ॥
प्रदीप्ते नरशार्दूल ! प्रयच्छामि नृपात्मज ! ।
धर्मपाशमहं राम ! कालपाशं तथैव च ॥ ८ ॥
वारुणं पाशमस्त्रं च ददाम्यहमनुत्तमम् ।
अशनी द्वे प्रयच्छामि शुष्कार्द्रे रघुनन्दन ! ॥ ९ ॥

---

सर्वशः सर्वाणि ॥ २ ॥ देवासुरगणान् वापि वा शब्दश्चार्थे गन्धर्वोरगसहित देवासुरगणरूपशत्रूनपि प्रसह्य बलेन जयिष्यसि जेष्यसि यदि वधे दया तदा वशीकृत्य सम्मोहनास्त्रादिना जेष्यसि अस्त्रे भानु का मथनेति भावः ॥ ३ ॥

दण्डचक्रादयोऽस्त्रभेदाः ॥ ४ ॥ ५ ॥ शूलवरं शूलवरनामकं क्वचित्तु शूलवरमिति पाठः ब्रह्मशिरोऽस्त्रं ब्रह्मास्त्रादन्यत् ॥ ६ ॥

गदे द्वे मोदकी शिखरी संज्ञे द्वे गदे गदा संज्ञकेऽस्त्रे ॥ ७ ॥ ८ ॥

अशनश्च वारुणास्त्रं चेत्यर्थः शुष्कार्द्रसंज्ञके द्वे अशनी अशनी संज्ञके अस्त्रे ॥ ९ ॥

ददामि चास्त्रं पैनाकमस्त्रं नारायणं तथा ।
आग्नेयमस्त्रं दयितं शिखरं नाम नामतः ॥ १० ॥
वायव्यं प्रथमं नाम ददामि तव चानघ ! ।
अस्त्रं हयशिरो नाम क्रौञ्चमस्त्रं तथैव च ॥ ११ ॥
शक्तिद्वयं च काकुत्स्थ ! ददामि तव राघव ! ।
कङ्कालं मुसलं घोरं कापालमथ किङ्किणीम् ॥ १२ ॥
वधार्थं रक्षसां यानि ददाम्येतानि सर्वशः ।
वैद्याधरं महास्त्रं च नन्दनं नामनामतः ॥ १३ ॥
असिरत्नं महाबाहो ! ददामि नृवरात्मज ! ।
गान्धर्वमस्त्रं दयितं मोहनं नामनामतः ॥ १४ ॥
प्रस्वापनं प्रशमनं दद्मि सौम्यं च राघव ! ।
वर्षणं शोषणं चैव सन्तापनविलापने ॥ १५ ॥
मादनञ्चैव दुर्धर्षं कन्दर्पदयितं तथा ।
गान्धर्वमस्त्रं दयितं मानवं नामनामतः ॥ १६ ॥

---

पिनाकिन इदं पैनाकं दयितं अग्नेरिति शेषः शिखरं नाम शिखरमिति प्रसिद्धम् ॥ १० ॥

प्रथमं मुख्यम् ॥ ११ ॥ कङ्कालादीन्यस्त्रधार्यास्त्राणि ॥ १२ ॥

यानि रक्षसां वधार्थं समर्थानि एतानि ददामीत्यन्वयः वैद्याधरं विद्याधरसम्बन्धि नन्दनं नाम असिरत्नमित्यन्वयः यतोऽस्त्रादसीनां प्रादुर्भाव इति भावः ॥ १३ ॥ १४ ॥

दद्मीत्यार्षं प्रशमनं रिपूणां क्रोधशामकमस्त्रं विलापनं परिदेवनकारकम् ॥ १५ ॥

मादनं शत्रूणां मदजनकं दुर्धर्षमित्याद्यस्त्र विशेषणम् ॥ १६ ॥

प्रैशाचमस्त्रं दयितं मोहनं नामनामतः ।
प्रतीच्छ नरशार्दूल ! राजपुत्र ! महायशः ॥ १७ ॥
तामसं नरशार्दूल ! सौमनं च महाबलम् ।
संवर्तं चैव दुर्धर्षं मौसलं च नृपात्मज ! ॥ १८ ॥
सत्यमस्त्रं महाबाहो ! तथा मयामयं परम् ।
सौरं तेजःप्रभं नाम परतेजोपकर्षणम् ॥ १९ ॥
सोमास्त्रं शिशिरं नाम त्वाष्ट्रमस्त्रं सुदारुणम् ।
दारुणञ्च भगस्यापि शीतेषुमथ मानदम् ॥ २० ॥
एतान् राम ! महाबाहो ! कामरूपान् महाबलान् ।
गृहाण परमोदारान् क्षिप्रमेव नृपात्मज ! ॥ २१ ॥
स्थितस्तु प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा ।
ददौ रामाय सुप्रीतो मन्त्रग्राममनुत्तमम् ॥ २२ ॥
सर्वसंग्रहणं येषां दैवतैरपि दुर्लभम् ।
तान्यस्त्राणि तदा विप्रो राघवाय न्यवेदयत् ॥ २३ ॥

---

प्रतीच्छ गृहाण ॥१७॥ मौसलं आहुरमसनादन्यत् ॥१८॥१९॥२०॥२१॥

मन्त्रग्रामं अस्त्राणां मन्त्रमूर्तित्वात् ननु बलातिबला दानप्रसङ्गेऽपि-मन्त्रग्रामं गृहाणेत्युक्तमिति पुनरत्र दानं विफलमिति चेन्न गृहाणेत्येव तत्रोक्तत्वात् न तु ददाविति तेन तत्कालोपयोगि बलातिबलयोरेव तत्र दानं इतरेषां त्वत्रेति विवेक इति कतकक्रतः वस्तुतो बलातिबले मन्त्रसमूहात्मके इति तद्रूपं मन्त्रग्राममिति तत्रार्थ इति न दोष इति परे ॥ २२ ॥

सर्वेति येषां उक्त दिव्यास्त्राणां सर्वसंग्रहणं सर्वधारणं कर्तुं दैवतैरपि दुर्लभं दुष्करं देवा अपि यत्किञ्चिदस्त्रमेव जानन्तीति भावः । तानि सर्वाण्यस्त्राणि राघवाय रामाय विश्वामित्रो न्यवेदयत् दत्तवान्

जपतस्तु मुनेस्तस्य विश्वामित्रस्य धीमतः ।
उपतस्थुर्महार्हाणि सर्वाण्यस्त्राणि राघवम् ॥ २४ ॥
ऊचुश्च मुदिता रामं सर्वे प्राञ्जलयस्तदा ।
इमे च परमोदार किङ्करास्तव राघव ! ॥ २५ ॥
यद्यदिच्छसि भद्रन्ते तत्सर्वं करवाम वै ।
ततो रामः प्रसन्नात्मा तैरित्युक्तो महाबलैः ॥ २६ ॥
प्रतिगृह्य च काकुत्स्थः समालभ्य च पाणिना ।
मानसा मे भविष्यध्वमिति तान्यभ्यचोदयत् ॥ २७ ॥
ततः प्रीतमना रामो विश्वामित्रं महामुनिम् ।
अभिवाद्य महातेजा गमनायोपचक्रमे ॥ २८ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बाल-
काण्डे सप्तविंशः सर्गः ॥ २७ ॥

---

राघवाय रामाय लक्ष्मणाय चेत्यपि बोध्यं युगपदेवोभयोरुपदेश इति बोध्यम् [ २३ ॥

जपतः रामाय दातुं तेषां वीर्यवत्ता सम्पादनाय तान्यस्त्राणि जपत इत्यर्थः उपतस्थुः गृहीतभासमानवपूंषि उपतस्थुः उपस्थितानि विश्वामित्र नियोगेन रामं च उपतस्थुः ॥ २४ ॥

सर्वेऽस्त्रदेवाः मुदिताः स्वाधिदैवत रामसम्बन्धेन तुष्टाः किङ्करा अङ्गीकृत दासत्वाः ॥ २५ ॥ २६ ॥

समालभ्य उपस्पृश्य मानसाः सदा मनः स्थिताः यद्यपि भगवतो रामस्य सर्वं विदितमेव तथापि विद्या गुरूपदेश गृहीतैः फलदा नान्यथेति लोकान् बोधयितुं विश्वामित्रोपदेश ग्रहणमिति बोध्यम् ॥२७॥२८॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः

प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनः शुचिः ।
गच्छन्नेव च काकुत्स्थो विश्वामित्रमथाब्रवीत् ॥१॥
गृहीतास्त्रोऽस्मि भगवन् ! दुराधर्षः सुरैरपि ।
अस्त्राणां त्वहमिच्छामि संहारान् मुनिपुङ्गव ! ॥ २ ॥
एवं ब्रुवति काकुत्स्थे विश्वामित्रो महातपाः ।
संहारान् व्याजहाराथ धृतिमान् सुव्रतः शुचिः ॥३॥
सत्यवन्तं सत्यकीर्त्तिं धृष्टं रभसमेव च ।
प्रतिहारतरं नाम पराङ्मुखमवाङ्मुखम् ॥ ४ ॥
लक्ष्यालक्ष्याविमौ चैव दृढनाभसुनाभकौ ।
दशाक्षशतवक्त्रौ च दशशीर्षशतोदरौ ॥ ५ ॥
पद्मनाभमहानाभौ दुन्दुनाभस्वनाभकौ ।
ज्योतिषं शकुनश्चैव नैरास्य विमलावुभौ ॥ ६ ॥
यौगन्धरविनिद्रौ च दैत्यप्रमथनौ तथा ।
शुचिबाहुर्महाबाहुर्निष्कलिर्विरुचस्तथा ।
सार्चिर्माली धृतिमाली वृत्तिमान् रुचिरस्तथा ॥ ७॥
पित्र्यः सौमनसश्चैव विधूतमकरावुभौ ।
करवीरं रतिश्चैव धनधान्यौ च राघव ! ॥ ८ ॥

---

गच्छन् गमिष्यन् ॥ १ ॥ संहारान् आहुर्मिति शेषः उपसंहारा-रित्याने पुनः प्रयोगानर्हं तया अप्राप्तप्रायत्वात्तज्ज्ञानेच्छा संहारो नाम प्रयुक्तस्यास्त्रस्य मन्त्रविशेषेण पुनः स्वात्मनि स्थापनम् ॥ १ ॥

एवमिति उक्तास्त्राणां संहारमार्गमुपदिश्य अथ अनन्तरं तत्-प्रश्नमन्तुष्टः परमर्षिः अन्यान्यप्यस्त्राण्युपदिशति स्म ॥ २ ॥

तदाह सत्यवन्तमित्यादि ददामीति सर्वत्र शेषः ॥ ४ ॥ ५ ॥ ६ ॥

सार्चिं माल्यादयोऽन्ये तांश्च ददामीत्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥

कामरूपं कामरुचिं मोहमावरणं तथा।
जृम्भकं सर्पनाथं च पन्थानवरुणौ तथा ॥ ९ ॥
कृशाश्वतनयान् राम ! भास्वरान् कामरूपिणः।
प्रतीच्छ मम भद्रन्ते पात्रभूतोऽसि राघव ! ॥ १० ॥
बाढमित्येव काकुत्स्थः प्रहृष्टेनान्तरात्मना।
दिव्यभास्वरदेहाश्च मूर्त्तिमन्तः सुखप्रदाः ॥ ११ ॥
केचिदङ्गारसदृशाः केचिद्धूमोपमास्तथा।
चन्द्रार्कसदृशाः केचित्प्रह्वाञ्जलि पुटास्तथा ॥ १२ ॥
रामं प्राञ्जलयो भूत्वाऽब्रुवन् मधुरभाषिणः।
इमेस्म नरशार्दूल ! शाधि किङ्करवाम ते ॥ १३ ॥
गम्यतामिति तानाह यथेष्टं रघुनन्दनः।
मानसाः कार्य्यकालेषु साहाय्यं मे करिष्यथ ॥ १४ ॥
अथ ते राम मामन्त्र्य कृत्वा चापि प्रदक्षिणम्।
एवमस्त्विति काकुत्स्थमुक्त्वा जग्मुर्यथागतम् ॥ १५ ॥

---

भास्वरांस्तेजोमयान् प्रतीच्छ गृहाण पात्रभूतः अस्त्रदानस्येति शेषः मम भक्तः ॥ १० ॥

बाढमित्यङ्गीकारे प्रहृष्टेनान्तरात्मना प्रत्यगृह्णादिति शेषः मूर्त्तिमन्तः स्व स्व देवतारूपेण ॥ ११ ॥

प्रह्वाञ्जलिपुटाः प्रह्वाः नम्राः ते च ते अञ्जलेः पुटं संश्लेषो येषां तादृशाः ॥ १२ ॥

इमे स्म सन्निहिता वयमिति शेषः शाधि आज्ञापय ॥ १३ ॥

गम्यतां इदानीमिति शेषः कार्यकालेषु मानसाः मनसि सन्निहिता भूत्वा साहाय्यं करिष्यथ ॥ १४ ॥

प्रदक्षिणं सकलस्वदेवमाऽधि दैवतरूपत्वाद्रामस्य प्रदक्षिणकरणम् ॥ १५ ॥

स च तान् राघवो ज्ञात्वा विश्वामित्रं महामुनिम् ।
गच्छन्नेवाथ मधुरं श्लक्ष्णं वचनमब्रवीत् ॥ १६ ॥
किमेतन् मेघसङ्काशं पर्वतस्याविदूरतः ।
वृक्षखण्डमितो भाति परं कौतूहलं हि मे ॥ १७ ॥
दर्शनीयं मृगाकीर्णं मनोहरमतीव च ।
नानाप्रकारैः शकुनैर्वल्गुभाषैरलंकृतम् ॥ १८ ॥
निःसृताः स्म मुनिश्रेष्ठ! कान्तारद्रोमहर्षणात् ।
अनया त्ववगच्छामि देशस्य सुखवत्तया ॥ १९ ॥
सर्वं मे शंस भगवन्! कस्याश्रमपदन्त्विदम् ।
संप्राप्ता यत्र ते पापा ब्रह्मघ्ना दुष्टचारिणः ॥ २० ॥
तव यज्ञस्य विघ्नाय दुरात्मानो महामुने । ॥
भगवंस्तस्य को देशः सा यत्र तव याज्ञिकी ॥ २१ ॥

---

एतदुत्तरं ततस्तु रामः काकुत्स्थः शासनाद् ब्रह्मवादिनः लक्ष्मणाय च तान् सर्वान् सचास्त्रान् रघुनन्दनः ससंहारान् सुसंहृष्टः श्रीमांस्तस्मै न्याददर्यादियधिकं दृश्यते तत्प्रक्षिप्तं बलातिबलयोरिवास्त्राणामपि युगपदुभयोर्विश्वामित्रेणैवोपदेशदानसम्भवात् स तान् उपदिष्टान् अस्त्रान् राघवो रामः ज्ञात्वा मन्त्रतो मूर्तितः प्रयोगतश्चेति शेषः ॥ १६ ॥

मेघसङ्काशं कार्ष्ण्यात् नैविड्याच्च वृक्षखण्डं वृक्षसमूहं किं वनसम्बन्धि उत आश्रमसम्बन्धीति प्रश्नः ॥१७॥ वल्गुभाषैः मधुरभाषैः॥१८॥

रोमहर्षणात् ताटकया निर्जनीकरणात् तस्य भयानकत्वेन रोमहर्षणत्वं अनया देशस्य सुखवत्तया इदमाश्रमपदं त्ववगच्छामि ॥ १९ ॥

आश्रमपदं निर्णीय तत् कस्येति शंसेति पृच्छति सर्वमिति सर्वं च शंस सर्वशब्दविवक्षितं जिज्ञासान्तरं स्वयमेवाह संप्राप्ता इति ते ब्रह्मघ्नास्तव यज्ञस्य विघ्नाय यत्र संप्राप्ताः स देशः कः ॥ २० ॥

रक्षितव्या क्रिया ब्रह्मन् ! मया वध्याश्च राक्षसाः ।
एतत्सर्वं मुनिश्रेष्ठ ! श्रोतुमिच्छाम्यहं प्रभो ! ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बाल-
काण्डे अष्टाविंशः सर्गः ॥ २८ ॥

---

एकोनत्रिंशः सर्गः । २९ ।

अथ तस्या प्रमेयस्य वचनं परिपृच्छतः ।
विश्वामित्रो महातेजा व्याख्यातुमुपचक्रमे ॥ १ ॥
इह राम ! महाबाहो ! विष्णुर्देव नमस्कृतः ।
वर्षाणि सुबहूनीह तथा युगशतानि च ॥ २ ॥
तपश्चरणयोगार्थमुवास सुमहातपाः ।
एष पूर्वाश्रमो राम ! वामनस्य महात्मनः ॥ ३ ॥

---

यत्र च तव याज्ञिकी क्रिया मया रक्षितव्या यत्र च राक्षसा वध्या भगवंस्तस्य त्वदाश्रमस्य कोदेशः प्रदेश इत्यन्वयः ॥ २१ ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये
आदिकाव्ये बालकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

तस्य रामस्य परिपृच्छतो वचनं श्रुत्वेति शेषः व्याख्यातुं पृष्टोत्तरमिति शेषः ॥ १ ॥

इह वने इह प्रदेशे ॥ २ ॥ तपश्चरणयोगार्थं स्वाचारेण लोकप्रवर्तनाय स्वतपश्चरणं वामनस्य करिष्यमाण वामनावतारस्य विष्णोः पूर्वाश्रमः वामनावतारात् पूर्वकाले तपो योगार्थं परिगृहीत आश्रमः ॥३॥

सिद्धाश्रम इति ख्यातः सिद्धो ह्यत्र महातपाः ।
एतस्मिन्नेव काले तु राजा वैरोचनिर्बलिः ॥ ४ ॥
निर्जित्य दैवतगणान सेन्द्रान् सह मरुद्गणान् ।
कारयामास तद्राज्यं त्रिषु लोकेषु विश्रुतः ॥ ५ ॥
यज्ञञ्चकार सुमहानसुरेन्द्रो महाबलः ।
बलेस्तु यजमानस्य देवाः साग्नि पुरोगमाः ।
समागम्य स्वयं चैव विष्णुमूचुरिहाश्रमे ॥ ६ ॥
बलिर्वैरोचनिर्विष्णो यजते यज्ञमुत्तमम् ।
असमाप्ते व्रते तस्मिन् स्वकार्यमभिपद्यताम् ॥ ७ ॥

---

सिद्धाश्रमत्व व्यवहारे बीजमाह हि यस्मात् अत्र महातपा विष्णुस्तपः सिद्धो जात इति एतस्मिन् काले विष्णोस्तपः काले ॥ ४ ॥

मरुद्गणान् आवहादिवायुगणान् कारयामास स्वार्थे णिच् चकारेत्यर्थः यद्वा इन्द्रादिराज्यं स्वीयैः कैश्चिदेव कारयामासेत्यन्वयः ॥ ५ ॥

बलेर्यजमानस्य व्यवहारं दृष्ट्वेति शेषः साग्निपुरोगमाः पुरोगमेनाग्निना सहिता इत्यर्थः अग्निमुखत्वाद्देवानां तस्मिन् पुरोगमत्वं स्वयमेवागम्य न तु दूतमुखेन ॥ ६ ॥

यजते कर्त्रभिप्रायत्वादात्मनेपदं नन्वसुरस्य बलेर्देवद्विषो यागाद्यनुपपत्तिः यागतर्पणीय देवताभावात् इन्द्रादीनां तद्द्वेष्यत्वात् न च शब्दमात्रं देवतेति युक्तं अर्थवादप्रामाण्येन देवताया विग्रहवत्त्वस्योत्तरमीमांसायां सिद्धान्तितत्वादिति चेन्न कर्मदेवाजान देवभेदेन देवानां द्वैविध्यात् तत्र ये कर्मणा देवत्वं प्राप्तास्ते कर्मदेवाः आजानदेवास्तु यज्ञमन्त्रार्थभूता मन्त्रेण नित्यसम्बद्धाः कर्मदेवेभ्यः प्राचीना एव तत्कर्मदेवानां द्वेष्यत्वेऽपि आजानदेवानां यज्ञे तर्प्यत्वेन न दोषः विघ्नकर्तारोऽप्यत्र कर्मदेवा एव यज्ञाद्यधिकाराभावोऽप्याजानदेवानामेव स्वयष्टव्य देवतान्तराभावात् कर्मदेवानां त्वस्त्येव अतएवेन्द्रादीनां यज्ञादिश्रवणं नानुपपन्न-

ये चैनमभिवर्तन्ते याचितार इतस्ततः ।
यच्च यत्र यथावच्च सर्वन्तेभ्यः प्रयच्छति ॥ ८ ॥
स त्वं सुरहितार्थाय माया योगमुपाश्रितः ।
वामनत्वं गतो विष्णो कुरु कल्याणमुत्तमम् ॥ ९ ॥
एतस्मिन्नन्तरे राम ! कश्यपोऽग्निसमप्रभः ।
अदित्या सहितो राम ! दीप्यमान इवौजसा ॥१०॥
देवी सहायो भगवान् दिव्यं वर्षसहस्रकम् ।
व्रतं समाप्य वरदन्तुष्टाव मधुसूदनम् ॥ ११ ॥
तपोमयं तपोराशिं तपोमूर्तिं तपात्मकम् ।
तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम् ॥ १२ ॥

---

निग्रहस्यात्र विस्तारः असमाप्तव्रते असमाप्तयज्ञे स्वकार्यं चात्मीयानां देवानां कार्यं अभिपद्यतां सम्पाद्यताम् ॥ ७ ॥

असमाप्तव्रत इत्युक्तः प्रयोजनं दर्शयन्नस्तत्सम्पादने उपायमपि स्वयमेव वदन्ति ये चेति अभिवर्तन्ते प्राप्नुवन्ति इतस्ततः नानादेशेभ्यः यत्र गोभूहिरण्यादिविषये यच्च वस्तु याचन्ते तेभ्यस्तत्सर्वं यथावत यत्र साद्गुण्याय असमानादिरहितं सत्कार पूर्वं प्रयच्छति चौ एवार्थे ॥ ८ ॥

माया स्वतत्त्वाच्छादनेन प्राकृतमर्त्यादिभावप्रकाशिका शक्तिस्तस्या योगः सम्बन्धस्तनाश्रितः वामनत्वप्राप्ता वयं हेतुः वामनरूपस्यात्याश्चर्यत्वेन तत्प्रार्थनाविषयस्यावश्य यजमान कर्तव्य तया तदुपपादनम् ॥ ९॥

एतस्मिन्नन्तरे देवैर्भगवानवतार प्रार्थनसमये रामेति द्विः सम्बोधनं स्वाश्रमसन्निधानेन राम पृष्टतन्नाश्रमस्यकथनेन हर्षातिशयाच्च बोध्यम् ॥१०॥

अदित्या सहितो व्रतं समाप्य देवी सहायस्तुष्टावेत्यन्वयः देवी अदितिरेव यद्वा देवी सरस्वती वरदं विष्णुरूप पुत्रप्राप्त्युद्देशेन कृत व्रतान्ते वरदानोन्मुखम् ॥ ११ ॥

स्तोत्र प्रकारमाह तपोमयमित्यादि अन्नमयो यज्ञ इतिवत् प्रचुर

शरीरे तव पश्यामि जगत्सर्वमिदं प्रभो ।
त्वमनादिरनिर्देश्यस्त्वामहं शरणङ्गतः ॥ १३ ॥
तमुवाच हरिः प्रीतः कश्यपं धूतकल्मषम् ।
वरं वरय भद्रं ते वरार्होऽसि मतो मम ॥ १४ ॥
तच्छ्रुत्वा वचनं तस्य मारीचः कश्यपोऽब्रवीत् ।
अदित्या देवतानां च मम चैवानुयाचितम् ॥ १५ ॥
वरं वरद सुप्रीतो दातुमर्हसि सुव्रत ।
पुत्रत्वं गच्छ भगवन्नदित्या मम चानघ ॥ १६ ॥
भ्राता भव यवीयांस्त्वं शक्रस्यासुरसूदन ।
शोकार्तानां तु देवानां साहाय्यं कर्तुमर्हसि ॥ १७ ॥
अयं सिद्धाश्रमो नाम प्रसादात्ते भविष्यति ।
सिद्धे कर्मणि देवेश उत्तिष्ठ भगवन्नितः ॥ १८ ॥

---

तपो युक्तमित्यर्थः तावता परेषां किमत आह तपोराशिं दृष्ट्वा त्वां सकलं तपोजन्यफलमप्राप्ता भगवतस्तपोराशित्वं ननु तपसोऽन्यत्वे अर्हे-त अविनाभावोऽत आह तपोमूर्तिमिति एवं च तपसस्तदनन्यत्वेन नार्हैत त्वं नः तपोमयमिति षष्ठ्यर्थे क विधानमिति क प्रत्यये तपनं तपः ज्ञानं तप आलोचन इति धात्वनुसारात् तदात्मकं ज्ञानस्वरूपमित्यर्थः ध्यानेन अतः तपसा दृष्टमशक्यं इत्यतस्तपसात्वामिति ॥ १२ ॥

दृश्यमानस्य वैराजं रूपमित्याह शरीरे इत्यादि अनिर्देश्यः अनन्य-परिच्छेद्यः ॥ १३ ॥

वरं अभीष्टं वरार्हः दिव्यवर्षसहस्र तपसा वरदानयोग्यः ॥ १४ ॥ मारीचः मरीचि पुत्रः अदित्या इत्यादिर्याचमानाया इत्यादि शेषः ॥१५॥

याच्यमानं वरमाह पुत्रत्वमित्यादि ॥ १६ ॥ यवीयान् कनिष्ठः [illegible] ॥ १७ ॥

अयं सिद्धाश्रम तपोमात्त्वं मया देवैश्च अनुभूयसे इत्यर्थः सिद्धे

अथ विष्णुर्महातेजा अदित्यां समजायत ।
वामनं रूपमास्थाय वैरोचनिमुपागमत् ॥ १९ ॥
त्रीन् पदानथ भिक्षित्वा प्रतिगृह्य च मेदिनीम् ।
आक्रम्य लोकाँल्लोकार्थी सर्वलोकहिते रतः ॥ २० ॥
महेन्द्राय पुनः प्रादान्नियम्य बलिमोजसा ।
त्रैलोक्यं स महातेजाश्चक्रे शक्रवशं पुनः ॥ २१ ॥
तेनैव पूर्वमाक्रान्त आश्रमः श्रमनाशनः ।
मयापि भक्त्या तस्यैव वामनस्योपभुज्यते ॥ २२ ॥
एनमाश्रममायान्ति राक्षसा विघ्नकारिणः ।
अत्र ते पुरुषव्याघ्र ! हन्तव्या दुष्टचारिणः ॥ २३ ॥
अद्य गच्छाम हे राम ! सिद्धाश्रममनुत्तमम् ।
तदाश्रमपदं तात ! तवाप्येतद्यथा मम ॥ २४ ॥
इत्युक्त्वा परमप्रीतो गृह्य रामं सलक्ष्मणम् ।
प्रविशन्नाश्रमपदं व्यरोचत महामुनिः ।
शशीव गतनीहारः पुनर्वसुसमन्वितः ॥ २५ ॥

---

एतदाश्रमस्थिति साध्ये तपः कर्मणि सिद्धे सति निष्पन्ने सति प्रयोजनाभावात् इत ऊर्ध्वं देवकार्येरिति शेषः ॥ १८ ॥

अथ देवकार्य्यनियोगानन्तरम् ॥ १९ ॥

आक्रम्य त्रिभिः पदैरिति शेषः लोकार्थी त्रैलोक्याक्रमणार्थी ॥ २० ॥

नियम्य बद्ध्वा ॥ २१ ॥ तेनैव वामनावतारकर्त्रा मया विश्वामित्रेण ॥ २

पूर्व्वसर्गान्तकृत द्वितीयप्रश्नोत्तरमाह एनमिति ॥ २२ ॥

अनुत्तमं सर्वोत्तमं हे तात ! तदेतदाश्रमपदं यथा मम स्वभूतं तथा तवापि विष्णववतारत्वादिति गूढोऽभिसन्धिः ॥ २४ ॥

पुनर्वसू द्वे तारे ॥ २५ ॥

तं दृष्ट्वा मुनयः सर्वे सिद्धाश्रमनिवासिनः ।
उत्पत्योत्पत्य सहसा विश्वामित्रमपूजयन् ॥ २६ ॥
यथार्हं चक्रिरे पूजां विश्वामित्राय धीमते ।
तथैव राजपुत्राभ्यामकुर्वन्नतिथिक्रियाम् ॥ २७ ॥
मुहूर्तमथ विश्रान्तौ राजपुत्रावरिन्दमौ ।
प्राञ्जली मुनिशार्दूलमूचतू रघुनन्दनौ ॥ २८ ॥
अद्यैव दीक्षां प्रविश भद्रन्ते मुनिपुङ्गव !
सिद्धाश्रमोऽयं सिद्धः स्यात्सत्यमस्तु वचस्तव ॥ २९ ॥
एवमुक्तो महातेजा विश्वामित्रो महानृषिः ।
प्रविवेश तदा दीक्षां नियतो नियतेन्द्रियः ॥ ३० ॥
कुमाराविव तां रात्रिमुषित्वा सुसमाहितौ ।
प्रभातकाले चोत्थाय पूर्वां सन्ध्यामुपास्य च ॥ ३१ ॥
प्रशुचौ परमं जाप्यं समाप्य नियमेन च ।

उत्पत्योत्पत्य सन्तोषातिशयादिति शेषः ॥ २६ ॥ २७ ॥ २८ ॥

अद्यैव प्रवेशदिन एव कालविलम्बे फलाभावात् सिद्धः त्वद्यज्ञसिद्ध्या अन्वर्थसिद्धसंज्ञः तव वचः अद्यैव पुरुषव्याघ्र हन्तव्या दुष्टचारिणी इति यत् तत्सत्यमस्तु राक्षसान् सर्वथा हनिष्ये इति भावः ॥ २९ ॥

नियतः निगृहीतान्तःकरणः ॥ ३० ॥

कुमाराविव स्कन्दविशाखाविव ॥ ३१ ॥

प्रशुचौ अत्यन्तस्नानाद्युचितकर्माचाराहितत्वेन प्रकर्षेण शुचौ नियमेन कर्तव्यं जाप्यं समाप्य अन्यत् दीक्षामध्ये नाग्निहोत्रमिति निषिद्धा

हुताग्निहोत्रमासीनं विश्वामित्रमवन्दताम् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बाल-
काण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

---

दग्निहोत्र पदमौपासन होमपरमिति केचित् ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदि-
काव्ये बालकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

## त्रिंशः सर्गः

अथ तौ देशकालज्ञौ राजपुत्रावरिन्दमौ ।
देशे काले च वाक्यज्ञावब्रूतां कौशिकं वचः ॥ १ ॥
भगवन् ! श्रोतुमिच्छावो यस्मिन् काले निशाचरौ
संरक्षणीयौ तौ ब्रूहि नातिवर्तेत तत्क्षणम् ॥ २ ॥
एवं ब्रुवाणौ काकुत्स्थौ त्वरमाणौ युयुत्सया ।
सर्वे ते मुनयः प्रीताः प्रशशंसुर्नृपात्मजौ ॥ ३ ॥
अद्यप्रभृति षड्रात्रं रक्षतां राघवौ युवाम् ।
दीक्षां गतो ह्येष मुनिर्मौनित्वञ्च गमिष्यति ॥ ४ ॥

---

अथेति कौशिकं वचो ब्रूतामित्यन्वयः ॥ १ ॥

तौ निशाचरौ संरक्षणीयौ यस्य संरक्षणाय निवारणीयौ गरुडादि-
त्वाक्तः तत्क्षणं सक्षणः यथा नातिवर्तेत नातिक्रमेत तथा ब्रूहीत्यन्वयः
॥ २ ॥ ३ ॥

एवं विश्वामित्रे दृष्टे दीक्षया तस्य मौनित्वादप्य ऋजु अद्येति

तौ तु तद्वचनं श्रुत्वा राजपुत्रौ यशस्विनौ ।
अनिद्रं षडहोरात्रं तपोवनमरक्षताम् ॥ ५ ॥
उपासाञ्चक्रतुर्वीरौ यत्तौ परमधन्विनौ ।
ररक्षतुर्मुनिवरं विश्वामित्रमरिन्दमम् ॥ ६ ॥
अथ काले गते तस्मिन् षष्ठेऽहनि तथागते ।
सौमित्रिमब्रवीद्रामो यत्तो भव समाहितः ॥ ७ ॥
रामस्यैवं ब्रुवाणस्य त्वरितस्य युयुत्सया ।
प्रजज्वाल ततो वेदिः सोपाध्याय पुरोहिता ॥ ८ ॥
सदर्भ चमसस्रुक्का ससमित् कुसुमोच्चया ।
विश्वामित्रेण सहिता वेदिर्जज्वाल सर्त्विजा ॥ ९ ॥
मन्त्रवच्च यथान्यायं यज्ञोऽसौ सम्प्रवर्तते ।
आकाशे च महाञ्छब्दः प्रादुरासीद्भयानकः ॥ १० ॥

---

मौनित्वञ्च गमिष्यति अद्यापि दीक्षितत्वात् मौन्येव अतः परमपि षड्रात्रपर्यन्तं मौनित्वं प्राप्स्यतीत्यर्थः ॥ ४ ॥ ५ ॥

यत्तौ सन्नद्धौ परमधन्विनावित्यासं विश्वामित्रं तदाश्रमम् ॥ ६ ॥

काले षडहोरात्रलक्षणे षष्ठेऽहनि आगते इति च्छेदः प्राप्ते इत्यर्थः यद्वा षष्ठेऽहनि गते रात्रावित्यर्थः यत्तः सन्नः समाहितः एकाग्रचित्तः ॥ ७ ॥

उपाध्यायो ब्रह्मा पुरोहित उपद्रष्टा इदं ऋत्विगन्तराणामप्युपलक्षणं इदं ज्वलनं राक्षसागमनसूचक उत्पात इत्याहुः दर्भसहितचमसस्रुग्वती समित्कुसुमोच्चयैश्च सहिता इदं वेदौ ज्वलनं यज्ञोद्देश्यकम् ॥ ९ ॥

संप्रवर्तते स्म आकाशे महाञ्छब्दः प्रादुरासीच्च ॥ १० ॥

आवार्य गगनं मेघो यथा प्रावृषि दृश्यते।
तथा मायां विकुर्वाणौ राक्षसावभ्यधावताम् ॥ ११॥
मारीचश्च सुबाहुश्च तयोरनुचरास्तथा।
आगम्य भीमसङ्काशा रुधिरौघानवासृजन् ॥ १२ ॥
तां तेन रुधिरौघेण वेदीं वीक्ष्य समुक्षिताम्।
सहसाभिद्रुतो रामस्तानपश्यत्ततो दिवि ॥ १३ ॥
तावापतन्तौ सहसा दृष्ट्वा राजीवलोचनः।
लक्ष्मणन्त्वभिसं प्रेक्ष्य रामो वचनमब्रवीत् ॥ १४ ॥
पश्य लक्ष्मण! दुर्वृत्तान् राक्षसान् पिशिताशनान्।
मानवास्त्रसमाधूताननिलेन यथाघनान् ॥ १५ ॥
करिष्यामि न सन्देहो नोत्सहे हन्तुमीदृशान्।
इत्युक्त्वा वचनं रामश्चापे सन्धाय वेगवान् ॥ १६ ॥
मानवं परमोदारमस्त्रं परमभास्वरम्।
चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ॥ १७ ॥

---

यथा प्रावृषि गगनमावार्य गगनमावृत्य महाशनि महागर्ज महावर्षादिविचित्रकारी दृश्यते तथा मायां प्रकटीकुर्वाणौ राक्षसौ अभ्यधावताम् ॥ ११ ॥
कौ तौ का च सा मायेत्यत आह मारीच इत्यादि अवासृजन्नवर्षुः ॥ १२॥
समुक्षितां अभ्यासे इति शेषः अभिद्रुतः अभितः यान्तं प्रधावन् तत्सहसा ततो दिवि तानपश्यत् ॥ १२ ॥
आपतन्तौ स्वसंमुखमागच्छन्तौ ॥ १४ ॥
मानवास्त्र समाधूतान् करिष्यामि यथेति योजना ॥ १५ ॥
ईदृशान् स्थितायुःशेषान् दुर्बलान् वा ॥ १६ ॥

स तेन परमास्त्रेण मानवेन समाहतः ।
सम्पूर्णं योजनशतं क्षिप्तः सागरसंप्लवे ॥ १८ ॥
विचेतनं विघूर्णन्तं शीतेषुबलपीडितम् ।
निरस्तं दृश्य मारीचं रामो लक्ष्मणमब्रवीत् ॥ १९ ॥
पश्य लक्ष्मण ! शीतेषुं मानवं मनुसंहितम् ।
मोहयित्वा नयत्येनं न च प्राणैर्वियुज्यते ॥ २० ॥
इमानपि वधिष्यामि निर्घृणान् दुष्टचारिणः ।
राक्षसान् पापकर्मस्थान् यज्ञघ्नान् रुधिराशनान् ॥२१॥
इत्युक्त्वा लक्ष्मणश्चाशु लाघवं दर्शयन्निव ।
विगृह्य सुमहच्चास्त्रमाग्नेयं रघुनन्दनः ॥ २२ ॥
सुबाहूरसि चिक्षेप स विद्धः प्राप तद्भुवि ।
शेषान् वायव्यमादाय निजघान महायशाः ।
राघवः परमोदारो मुनीनां मुदमावहन् ॥ २३ ॥
स हत्वा राक्षसान् सर्वान्यज्ञघ्नान् रघुनन्दनः ।
ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ॥ २४ ॥

---

परमोदारं परमश्रेष्ठम् ॥ १७ ॥ स तेनेति स मारीचः सागरसंप्लवे समुद्रमध्ये ॥ १८ ॥

विचेतनं चैतन्यरहितं अत एव विघूर्णमानं शीतेषुरिति मानवास्त्रनामान्तरं दृश्य दृष्ट्वा ॥ १९ ॥

शीतेषुं शीतेष्विल्यपरनामकं मानवास्त्रं मनुसंहितं मनुप्रयुक्तं वियुज्यते वियोजयतीति यावत् ॥ २० ॥ २१ ॥ २२ ॥

निजघान दूरोत्सारणपूर्वकं नाशनं वायव्यास्त्रफलं बोध्यम् ॥ २३ ॥

अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः ।
निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत् ॥२५॥
कृतार्थोऽस्मि महाबाहो ! कृतं गुरुवचस्त्वया ।
सिद्धाश्रममिदं सत्यं कृतं वीर ! महायशः ।
स हि रामं प्रशस्यैवं ताभ्यां सन्ध्यामुपागमत् ॥२६॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बाल-
काण्डे त्रिंशः सर्गः ॥ ३० ॥

---

## एकत्रिंशः सर्गः

अथ तां रजनीं तत्र कृतार्थौ रामलक्ष्मणौ ।
ऊषतुर्मुदितौ वीरौ प्रहृष्टेनान्तरात्मना ॥ १ ॥
प्रभातायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियौ ।
विश्वामित्रमृषींश्चान्यान् सहितावभि जग्मतुः ॥ २ ॥

---

॥ २४ ॥ निरीतिकाः निराबाधाः ॥ ५ ॥ सत्यं कृतं अभ्यर्थनामकं कृत-
मित्यर्थः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदि-
काव्ये बालकाण्डे त्रिंशः सर्गः ॥ ३० ॥

एवं स्वयज्ञ विघ्नविनाशफलकं सर्वास्त्रसम्बन्धानुग्रहं कृत्वा भगवान्
विश्वामित्रः सहज सख्यो शास्त्रसम्बन्धानुग्रहाय प्रवर्तत इत्याह अथेति
तत्र यज्ञशालायां ॥ १ ॥

कृता पौर्वाह्णिकी क्रिया याभ्यान्तौ अभिजग्मतुः अभिवादार्थमिति-
शेषः तदुक्तं पूर्वसर्गान्ते सन्ध्यामुपागमदिति सह रतो विश्वामित्रो
होमार्थमन्तरेवा यागशालामागत इति बोध्यम् ॥ २ ॥

अभिवाद्य मुनिश्रेष्ठं ज्वलन्तमिव पावकम् ।
ऊचतुः परमोदारं वाक्यं मधुरभाषिणौ ॥ ३ ॥
इमौ स्म मुनिशार्दूल ! किङ्करौ समुपागतौ ।
आज्ञापय मुनिश्रेष्ठ ! शासनं करवाव किम् ॥ ४ ॥
एवमुक्ते तयोर्वाक्ये सर्व एव महर्षयः ।
विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ॥ ५ ॥
मैथिलस्य नरश्रेष्ठ ! जनकस्य भविष्यति ।
यज्ञः परमधर्मिष्ठस्तत्र यास्यामहे ! वयम् ॥ ६ ॥
त्वं चैव नरशार्दूल ! सहास्माभिर्गमिष्यसि ।
अद्भुतं च धनूरत्नं तत्र त्वं द्रष्टुमर्हसि ॥ ७ ॥
तद्धि पूर्वं नरश्रेष्ठ ! दत्तं सदसि दैवतैः ।
अप्रमेयबलं घोरं मखे परमभास्वरम् ॥ ८ ॥
नास्य देवा न गन्धर्वा नासुरा न च राक्षसाः ।
कर्तुमारोपणं शक्ता न कथञ्चन मानुषाः ॥ ९ ॥

---

मुनिश्रेष्ठं विश्वामित्रम् ॥ ३ ॥ स्मेत्यव्ययम् ॥ ४ ॥

तयोरिति ताभ्यामित्यर्थे विश्वामित्रं पुरस्कृत्य अत विश्वामित्रानुमतिका इति भावः ॥ ५ ॥

मैथिलस्य मैथिलाधिपतेः परमधर्मिष्ठः उत्कटातिशयवित् अर्थवान् परमेति पृथक्पदं वा परमधार्मिकत्वार्थकं राम सम्बोधनम् ॥ ६ ॥ ७ ॥

पूर्वं पूर्वस्मिन्काले देवरातस्य प्राचीनजनकस्य यज्ञे सदसि दैवतैर्दक्षयज्ञवधे प्रसादितान्महादेवाल्लब्धं यस्य प्रसादितैः शिवप्रसादितैर्दैवतैर्दत्तं जनकान्ते तिष्ठतीति शेषः ॥ ८ ॥

धनुषस्तस्य वीर्यं हि जिज्ञासन्तो महीक्षितः ।
न शेकुरारोपयितुं राजपुत्रा महाबलाः ॥ १० ॥
तद्धनुर्नरशार्दूल ! मैथिलस्य महात्मनः ।
तत्र द्रक्ष्यसि काकुत्स्थ ! यज्ञञ्च परमाद्भुतम् ॥ ११ ॥
तद्धि यज्ञफलं तेन मैथिलेनोत्तमं धनुः ।
याचितं नरशार्दूल ! सुनाभं सर्वदैवतैः ॥ १२ ॥
आयागभूतं नृपतेस्तस्य वेश्मनि राघव ! ।
अर्चितं विविधैर्गन्धैर्धूपैश्चागुरुगन्धिभिः ॥ १३ ॥
एवमुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा ।
सर्षिसङ्घः स काकुत्स्थ आमन्त्र्य वनदेवताः ॥ १४ ॥

---

तस्याङ्ग सत्वमाह नाशकेति आरोपणं शरप्रक्षेपयोग्यज्या सम्बन्धः न कथञ्चन न कथमपीत्यर्थः ॥ ९ ॥ १० ॥

तत्र मिथिलायां यज्ञञ्चेति यज्ञं द्रक्ष्यसि चेत्यन्वयः चकारेण जानकीस्वीकार समुच्चयः ॥ ११ ॥

कुतस्तादृश धनुषस्तत्र स्थितिस्तत्राह तद्धीति उत्तमं तद्धनुः मैथिलेन निजयज्ञ प्रीत देवेभ्यो यज्ञफलत्वेन याचितं युद्धे रिपूणां जयाय सर्वदैवतैः शिवसहितैः सर्वदैवतैर्दत्तं अतस्तत्र तिष्ठतीत्यर्थः तदुक्तं पाद्मे चापं शम्भोर्दया दत्तमिति कौर्मेऽपि प्रीतश्च भगवानीशस्त्रिशूलीनीललोहितः प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनुरिति सुनाभं शोभनमुष्टिबन्धनस्थानम् ॥ १२ ॥

आयागभूतं यजनीय देवता भूतमित्यर्थः वेश्मनीत्यस्य तिष्ठतीति शेषः अतएवाह अर्चितमित्यादि न्यासभूतं नरपतेरिति क्वचित्पाठः तत्रापि न्यस्यते अर्च्यतेऽस्मिन्देशतेति व्युत्पत्त्या स एवार्थः देवतान्यासश्च यागार्थ एव मतमादौ ॥ १३ ॥

एवमुक्त्वेति महर्षिगणाहारेति शेषः मुनिवरो विश्वामित्रः वनदेवताः वनदुर्गाद्याः ॥ १४ ॥

स्वस्ति वोऽस्तु गमिष्यामि सिद्धः सिद्धाश्रमादहम् ।
उत्तरे जाह्नवीतीरे हिमवन्तं शिलोच्चयम् ॥ १५ ॥
इत्युक्त्वा मुनिशार्दूलः कौशिकः स तपोधनः ।
उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥ १६ ॥
तं व्रजन्तं मुनिवरमन्वगादनुसारिणाम् ।
शकटीशतमात्रं तु प्रयाणे ब्रह्मवादिनाम् ॥ १७ ॥
मृगपक्षिगणाश्चैव सिद्धाश्रमनिवासिनः ।
अनुजग्मुर्महात्मानं विश्वामित्रं तपोधनम् ॥ १८ ॥
निवर्तयामास ततः सर्षिसङ्घः सपक्षिणः ।
ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ॥ १९ ॥
वासं चक्रुर्मुनिगणाः शोणाकूले समाहिताः ।
तेऽस्तंगते दिनकरे स्नात्वा हुतहुताशनाः ॥ २० ॥
विश्वामित्रं पुरस्कृत्य निषेदुरमितौजसः ।
रामोऽपि सहसौमित्रिर्मुनींस्तानभिपूज्य च ॥ २१ ॥
अग्रतो निषसादाथ विश्वामित्रस्य धीमतः ।
अथ रामो महातेजा विश्वामित्रं तपोधनम् ॥ २२ ॥

---

सिद्धः निर्विघ्नयज्ञ सिद्ध इति भावः क्व गमिष्यसीत्यत आह उत्तरे इति ॥ १५ ॥ १६ ॥

अनुसारिणां उक्त दिग्गमनानुसारिणां ब्रह्मवादिनामिति वा शकटीशतमात्रं शतपरिच्छिन्न शकट्यारोपिताग्निहोत्रसम्भारादिमत् ब्रह्मवादिनां यूथं अन्वयादिति सम्बन्धः ॥ १७ ॥ १८ ॥

पक्षिणो निवर्तयामासेत्यनेन ऋषीणामनिवर्तनमुक्तं तदेवाह ते गत्वेति ॥ १९ ॥

शोणनद्यस्यैव शोणा इत्यपि नामेत्याहुः वस्तुतः शोणा इति गिरि

पप्रच्छ मुनिशार्दूलं कौतूहलसमन्वितम् ।
भगवन् ! कोन्वयं देशः समृद्धवनशोभितः ॥ २३ ॥
श्रोतुमिच्छामि भद्रन्ते वक्तुमर्हसि तत्त्वतः ।
चोदितो रामवाक्येन कथयामास सुव्रतः ।
तस्य देशस्य निखिलमृषिमध्ये महातपाः ॥२४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

ब्रजसमीपस्थो नदीविशेष इत्येतदुत्तर सर्गे स्पष्टं अस्तङ्गते अर्कं जिगमिषतीत्यर्थः ॥ २० ॥ २१ ॥ २२ ॥

अयं देशः शोणाकूलस्थः ॥ २३ ॥ निखिलं वैभवमिति शेषः ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

## द्वात्रिंशः सर्गः

ब्रह्मयोनिर्महानासीत् कुशोनाम महातपाः ।
अक्लिष्टव्रतधर्मज्ञः सज्जन प्रतिपूजकः ॥ १॥
स महात्मा कुलीनायां युक्तायां सुमहाबलान् ।
वैदर्भ्यां जनयामास चतुरः सदृशान् सुतान् ॥ २ ॥

---

शोणाकूलदेश वैभव प्रश्ने महं शत्रागमनं देश इत्युत्तरमाह ब्रह्मयोनिरिति ब्रह्मपुत्र इत्यर्थः अक्लिष्ट व्रतश्चासौ धर्मज्ञश्चेति विग्रहः ॥१॥

युक्तायां अपेक्षितगुणयुक्तायामित्यर्थः ॥ २ ॥

कुशाम्बं कुशनाभञ्च अमूर्त्तरजसं वसुम् ।
दीप्तियुक्तान् महोत्साहान् क्षत्रधर्म्मं चिकीर्षया ॥३॥
तानुवाच कुशः पुत्रान् धर्म्मिष्ठान् सत्यवादिनः ।
क्रियतां पालनं पुत्रा धर्म्मं प्राप्स्यथ पुष्कलम् ॥४॥
कुशस्य वचनं श्रुत्वा चत्वारो लोकसत्तमाः ।
निवेशञ्चक्रिरे सर्वे पुराणां नृवरास्तदा ॥ ५ ॥
कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत् पुरीम् ।
कुशनाभस्तु धर्म्मात्मा पुरञ्चक्रे महोदयम् ॥ ६ ॥
अमूर्त्तरजसो नाम धर्मारण्यं महामतिः ।
चक्रे पुरवरं राजा वसुर्नाम गिरिव्रजम् ॥ ७ ॥
एषा वसुमती नाम वसोस्तस्य महात्मनः ।
एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥८॥
सुमागधी नदी रम्या मगधान्विश्रुता ययौ ।
पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥ ९ ॥
सैषा हि मागधी राम! वसोस्तस्य महात्मनः ।
पूर्वाभिचरिता राम ! सुक्षेत्रा सस्यमालिनी ॥ १० ॥

---

अमूर्त्तरजसं न विद्यते मूर्त्तं प्रकृतं रजो यस्य तं अजिति योग-विभागाद्‌च क्षत्रधर्म चिकीर्षया तद्धर्मपरिकरणेच्छया ॥ ३ ॥

पालनं प्रजापालनम् ॥ ४ ॥ निवेशं सन्निवेशम् ॥ ५ ॥

महोदयं महोदयनामकम् ॥ ६ ॥ ७ ॥

एषा गिरि व्रजापरपर्याया ॥ ८ ॥ सुमागधी नद्‌ संज्ञा-आययाविति पदच्छेदः ॥ ९ ॥

सा मागधी मगधादागततया मागधीत्वेन प्रसिद्धा सा एषा शोणा

कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम् ।
जनयामास धर्मात्मा घृताच्यां रघुनन्दन ॥ ११ ॥
तास्तु यौवनशालिन्यो रूपवत्यः स्वलंकृताः ।
उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः ॥ १२ ॥
गायन्त्यो नृत्यमानाश्च वादयन्त्यस्तु राघव ! ।
आमोदं परमं जग्मुर्वराभरणभूषिताः ॥ १३ ॥
अथ ताश्चारुसर्वाङ्ग्यो रूपेणाप्रतिमा भुवि ।
उद्यानभूमिमागम्य तारा इव घनान्तरे ॥ १४ ॥
ताः सर्वगुणसम्पन्ना रूपयौवनसंयुताः ।
दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् ॥ १५ ॥
अहं वः कामये सर्वा भार्या मम भविष्यथ ।
मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ ॥ १६ ॥
चलं हि यौवनं नित्यं मानुषेषु विशेषतः ।
अक्षयं यौवनं प्राप्ता अमर्यश्च भविष्यथ ॥ १७ ॥

---

तस्य महांशस्य वसोर्भवति पूर्वाभिचरिता पूर्वदिग्गामिनी सुचेत्या पार्श्वद्वयेऽपीति शेषः ॥ १० ॥

घृताच्यां तन्नामिकाप्सरःसु ॥ ११ ॥ ताः शतं कन्याः ॥ १२ ॥

आमोदं सन्तोषम् ॥ १२ ॥ घनान्तरे मेघमध्ये तारा इव रेजुरिति शेषः ॥ १४ ॥ १५ ॥

मत्कामना पूरणे मम देवस्य मानुष्योऽपि भार्या भविष्यथेत्यादिरं-गीकरणायार्थवादः नतु मानुषीणां देवसम्बन्धोऽनुचितस्तस्माच्च मानुषः त्यज्यतां भाव इति मदङ्गीकारमात्रेण विलक्षणशक्त्याविर्भावान्मानुषभावत्यागे स्वत एव भवतीनां सामर्थ्यं भविष्यतीति तत्फलमाह दीर्घमिति ॥ १६ ॥ मानुषेषु हि यतः विशेषेण नित्यमनुष्णं यौवनं चलं

तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मणः ।
अपहास्य ततो वाक्यं कन्याशतमथाब्रवीत् ॥ १८ ॥
अन्तश्चरसि भूतानां सर्वेषां सुरसत्तम ! ।
प्रभावज्ञाश्च ते सर्वाः किमर्थमवमन्यसे ॥ १९ ॥
कुशनाभसुता देव ! समस्ताः सुरसत्तम ! ।
स्थानाच्च्यावयितुं देवं रक्षामस्तु तपो वयम् ॥ २० ॥
माभूत्स कालो दुर्मेधः ! पितरं सत्यवादिनम् ।
अवमन्य स्वधर्मेण स्वयंवरमुपास्महे ॥ २१ ॥
पिता हि प्रभुरस्माकं दैवतं परमं च सः ।
यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥ २२ ॥

---

चञ्चलं क्षीयमाणमिति यावत् अतो मत्सम्बन्धेन अक्षयं यौवनमित्या-द्यन्वयः ॥ ॥ १७ ॥ अपहास्य हासपूर्वकमपमान्य ॥ १८ ॥

अन्तश्चरसीति पूर्वार्द्धेन स्वभावज्ञता वायोः सूचिता ननु युष्मत् प्रभावापेक्षया मत्प्रभावोऽधिक इति चेत्तत्राह प्रभावज्ञाश्च ते सर्वाः तथा च अयं माकार्षीरिति भावः तस्मादेवमनुचित प्रार्थनया अस्मदवमाननमनु-चितमित्याह किमर्थमित्यादि ॥ १९ ॥

स्वप्रभावं दर्शयन्ति कुशनाभेत्यादि स्थानात् वायुपदात् देवमपि त्वां च्यावयितुं समर्था इति शेषः रक्षामस्त्विति प्रायेण तथा करणे हि तत्क्षयः स्यादिति भावः ॥ २० ॥

हे दुर्मेधः ! दुर्बुद्धे ! स कालः पितरमवमन्य अपमानविषयं कृत्वा स्वधर्मेण कामेन स्वयं वरमुपास्महे आत्मना स्वातन्त्र्येण वयं वरमङ्गीकुर्मः स कालः कदाचिदपि माभूदित्यन्वयः नावमन्येति पाठस्तु काचित्-कोऽपपाठः तथा पाठेन इति च्छेदः छान्दसं दीर्घत्वं नः अस्माकं स कालो माभूदित्यन्वयः कश्चित्तु मोऽवमन्यस्वेति पाठः अतएव माभूत्स-कालो यदा नो पितरं सत्यवादिनं कामतः समतिक्रम्य वरयेम स्वयं-वरमित्येतदर्थं विवरण श्लोको दृश्यते क्वचित् ॥ २१ ॥

तासान्तु वचनं श्रुत्वा हरिः परमकोपनः ।
प्रविश्य सर्वगात्राणि बभञ्ज भगवान् प्रभुः ॥ २३ ॥
ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम् ।
प्रविश्य च सुसम्भ्रान्ताः सलज्जाः सास्रलोचनाः ॥२४॥
स च ता दयिता भग्नाः कन्याः परमशोभनाः ।
दृष्ट्वा दीनास्तदा राजा सम्भ्रान्त इदमब्रवीत् ॥२५॥
किमिदं कथ्यतां पुत्र्यः ! को धर्ममवमन्यते ।
कुब्जाः केन कृताः सर्वाश्चेष्टन्त्यो नाभिभाषत ॥२६॥
एवं राजा विनिःश्वस्य समाधिं सन्दधे ततः ॥ २७॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बाल-
काण्डे द्वात्रिंशः सर्गः ॥ ३२

तत्र बीजमाह पितेति ॥ २२ ॥ हरिर्वायुः कश्चित्तु वायु-
रित्येव पाठः ॥ २३ ॥

सलज्जाः अन्याय्य प्रति प्रवृत्तः सलज्जाः ॥ २४ ॥

भग्नाः भग्नाङ्गाः ॥ २५ ॥ धर्ममवमन्यते बलात्कारं करोतीति
यावत् रोदनादिना चेष्टन्त्यः किन्नाभिभाषथेत्यन्वयः ॥ २६ ॥

एवं पृष्टे ताभिः समाधिं सन्दधे इति तद्वचः श्रवणैकाग्रचित्तोऽ-
भूदित्यर्थः ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदि-
काव्ये बालकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## त्रयस्त्रिंशः सर्गः

तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः ।
शिरोभिश्चरणौ स्पृष्ट्वा कन्याशतमभाषत ॥ १ ॥
वायुः सर्वात्मको राजन् ! प्रधर्षयितुमिच्छति ।
अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते ॥ २ ॥
पितृमत्यः स्म भद्रन्ते स्वच्छन्देन वयं स्थिताः ।
पितरं नो वृणीष्व त्वं यदि नो दास्यते तव ॥ ३ ॥
तेन पापानुबन्धेन वचनं न प्रतीच्छता ।
एवं ब्रुवन्त्यः सर्वाः स्म वायुनाभिहता भृशम् ॥ ४ ॥
तासान्तु वचनं श्रुत्वा राजा परमधार्मिकः ।
प्रत्युवाच महातेजाः कन्याशतमनुत्तमम् ॥ ५ ॥
क्षान्तं क्षमावतां पुत्र्यः ! कर्तव्यं सुमहत्कृतम् ।
ऐकमत्यमुपागम्य कुलञ्चावेक्षितं मम ॥ ६ ॥

---

तस्येति चरणौ स्पृष्ट्वा नमस्कृत्य ॥ १ ॥ प्रधर्षयितुं अभि भवितुं इच्छति स अशुभं बलात्काररूपं अवेक्षते च ॥ २ ॥

पितृमत्यः पित्रधीनाः स्वच्छन्देन पति स्वीकारविषये स्वातन्त्र्येण स्थिताः न वर्तामहे यतः अतो नः पितरं वृणीष्व त्वं यदि नः अस्मान् तुभ्यं स दास्यति तदा तव त्वदीयाः भविष्यामः ते तव भद्रमस्तु इति योजना ॥ ३ ॥

एवं ब्रुवन्तीर्नो वचनं न प्रतीच्छता अनङ्गीकुर्वता पापानुबन्धेन अधर्मबद्धचित्तेन एवं धर्मं ब्रुवन्त्यः सर्वाः वायुना अभिहताः स्म इति योजना ॥ ४ ॥ ५

हे पुत्र्यः ! क्षमावतां क्षमावद्भिः कर्तुमर्हं यत् क्षान्तं क्षमा तत् सुमहत्सुकृतं महती क्षमा कृतेति यावत् नाशभङ्गोऽस्य क्रोधवेग सह न

अलङ्कारो हि नारीणां क्षमा तु पुरुषस्य वा ।
दुष्करं तच्च वै चान्तं त्रिदशेषु विशेषतः ॥ ७ ॥
यादृशी वः क्षमा पुत्र्यः ! सर्वासामविशेषतः ।
क्षमा दानं क्षमा सत्यं क्षमा यज्ञाश्च पुत्रिकाः ! ॥८॥
क्षमा यशः क्षमा धर्मः क्षमायां विष्ठितं जगत् ।
विसृज्य कन्याः काकुत्स्थ ! राजा त्रिदशविक्रमः ॥९॥
मन्त्रज्ञो मन्त्रयामास प्रदानं सह मन्त्रिभिः ।
देशे काले च कर्तव्यं सदृशे प्रतिपादनम् ॥ १० ॥
एतस्मिन्नेव काले तु चूली नाम महाद्युतिः ।
ऊर्द्ध्वरेताः शुभाचारी ब्राह्मं तप उपागमत् ॥ ११ ॥

---

मति दुष्करमिति भावः यच्च कुलं क्षवेक्षितं कामवेग सहनं कृतं तदपि समहत् ॥ ६ ॥

पुरुषस्य वेति अविशेषेणेति शेषः तत्तु दुष्करं यत् त्रिदशविषये क्षान्तं कामवेग सहनं कृतं तत् अति दुष्करं तेषां अभिरूपादिकम-नीय गुणबाहुल्यात् ॥ ७ ॥

स्वकन्यानां क्षमां श्लाघयंस्तादृशीं क्षमां स्वकुले प्रार्थयते यादृशीति भो पुत्र्यः ! यादृशी युष्माकं क्षमा तादृशी मत्कुले सर्वासामस्त्विति शेषः अथवाऽविशेषतः सकलस्त्रीपुरुषाविशेषेणेत्यर्थः क्षमायाः प्रार्थनीयत्वे निमित्तमाह क्षमेत्यादि दान सत्यवचन यज्ञ समाधिज सकलधर्मफला क्षमा सकल जगदाधार भूता च क्षमाऽतः सोपादेयेत्यर्थः ॥ ८ ॥ ९ ॥

प्रदानं कन्याप्रदानं उचिते देशे काले सदृशे स्वकुलादि सदृशे पात्रे प्रदानं कर्तव्यमिति मन्त्रस्य प्रकारः ॥ १० ॥

ऊर्ध्वरेताः ब्रह्मचारी ब्राह्मं तपः ब्रह्मविषये चित्तैकाग्र्यं मनस-श्चेन्द्रियाणां च ऐकाग्र्यं परमं तप इति श्रुतिः ॥ ११ ॥

तपस्यन्तमृषिं तत्र गन्धर्वी पर्युपासते ।
सोमदा नाम भद्रं ते ऊर्मिलातनया तदा ॥ १२ ॥
सा च तं प्रणता भूत्वा शुश्रूषणपरायणा ।
उवास काले धर्मिष्ठा तस्यास्तुष्टोऽभवद्गुरुः ॥ १३ ॥
स च तां कालयोगेन प्रोवाच रघुनन्दन ।
परितुष्टोऽस्मि भद्रं ते किं करोमि तव प्रियम् ॥ १४ ॥
परितुष्टं मुनिं ज्ञात्वा गन्धर्वी मधुरस्वरम् ।
उवाच परमप्रीता वाक्यज्ञा वाक्यकोविदम् ॥ १५ ॥
लक्ष्म्या समुदितो ब्राह्म्या ब्रह्मभूतो महातपाः ।
ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि धार्मिकम् ॥ १६ ॥
अपतिश्चास्मि भद्रं ते भार्या चास्मि न कस्यचित् ।
ब्राह्मेणोपगतायाश्च दातुमर्हसि मे सुतम् ॥ १७ ॥

---

यदा चूलीतपस्यति तदा ऊर्मिलातनया सोमदा नाम गन्धर्वी तं पर्युपास्ते स मय्यनुग्रहं कुर्विति प्रार्थनया सेवते स्म पर्युपासत इति यवलुगार्षः ॥ १२ ॥

तमिति प्रतियोगे द्वितीया तत्समीपे उवासेत्यर्थः ॥ १३ ॥

कालयोगेन शुश्रूषाजनित धर्मपरिपाकार्ह कालसम्बन्धेन अनेन दिव्ययोगिन्यो योगिनोः अवाङ्मय तपः शक्तिः सूचिता ॥ १४ ॥ १५ ॥

ब्राह्म्या लक्ष्म्या ब्रह्मवर्चसेन ब्रह्मभूतः ब्रह्मात्मभावनया अतएव महातपाः यतस्त्वमीदृशः अतो ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि ब्राह्मं तपः ब्रह्मविषयमैकाग्र्यं यद्वा ब्राह्मं तपः स्वाध्यायः ॥ १६ ॥

ननु पुत्रप्रार्थनापत्नी तु चिता तत्राह अपतिश्चास्मि इतः परमपि कस्यचिदहं न कस्यचिद्भार्या भविष्यामीति शेषः अनेन नैष्ठिकब्रह्मचारिणीत्वं सूचितं अथापि यथा पुत्रप्राप्तिर्भवति तथा ते भद्रं अनुग्र-

तस्याः प्रसन्नो ब्रह्मर्षिर्ददौ ब्राह्म्यमनुत्तमम् ।
ब्रह्मदत्त इति ख्यातं मानसं चूलिनः सुतम् ॥ १८ ॥
स राजा ब्रह्मदत्तस्तु पुरीमध्यवसत्तदा ।
काम्पिल्याम्परया लक्ष्म्या देवराजो यथादिवम्॥१९॥
स बुद्धिं कृतवान् राजा कुशनाभः सुधार्मिकः ।
ब्रह्मदत्ताय काकुत्स्थ ! दातुं कन्याशतं तदा ॥२०॥
तमाहूय महातेजा ब्रह्मदत्तं महीपतिः ।
ददौ कन्याशतं राजा सुप्रीतेनान्तरात्मना ॥ २१ ॥
यथाक्रमं तदा पाणिं जग्राह रघुनन्दन ! ।
ब्रह्मदत्तो महीपालस्तासां देवपतिर्यथा ॥ २२ ॥
स्पृष्टमात्रे तदा पाणौ विकुब्जा विगतज्वराः ।
युक्तं परमया लक्ष्म्याबभौ कन्याशतं तदा ॥ २३ ॥

स्थोऽस्तु नन्वेवं नैष्ठिकब्रह्मचर्ये कथं पुत्रलाभः सम्भाव्येत अत आह ब्राह्मेणेति उपगतायाः किङ्करत्वं प्राप्तायाः ब्राह्मेण ब्रह्मसम्बन्धिना उपायेन मे सुतं दातुमर्हसि सनकादय इव मानस पुत्रो देय इति भावः ॥ १७ ॥

तस्याः सोमदायाः प्रसन्नः चूलिननामा ब्रह्मर्षिर्ब्राह्मं ब्रह्म तपसा युक्तं ब्राह्मणदत्तत्वाद्ब्रह्मदत्त इति ख्यातं मानसं सुतं ददावित्यन्वयः फली फलिन इति वत् चूली चूलिन इति [illegible]नोभयं साधु ॥ १८ ॥

राजा गन्धर्व्याः सोमदायाः क्षत्रियत्वात् काम्पिल्यां कम्पिलेन निर्वृत्ताम् ॥ १९ ॥ २० ॥ २१ ॥

देवपतिर्यथा इन्द्रसदृशो महीपाल इत्यर्थः ॥ २२ ॥

तदा तेन राज्ञा पाणौ स्पृष्टमात्रे ताः कन्या विकुब्जाः कुब्जत्वरहिताः आसन्निति शेषः ब्राह्मतपो युक्तत्वादेवं सामर्थ्यं राज्ञः एवं च सति तत्कन्याशतं परमया लक्ष्म्या बभावित्यन्वयः ॥ २३ ॥

स दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः ।
बभूव परमप्रीतो हर्षं लेभे पुनःपुनः ॥ २४ ॥
कृतोद्वाहन्तु राजानं ब्रह्मदत्तं महीपतिम् ।
सदारं प्रेषयामास सोपाध्यायगणं तदा ॥ २५ ॥
सोमदापि सुतं दृष्ट्वा पुत्रस्य सदृशीं क्रियाम् ।
यथान्यायं च गन्धर्वी स्नुषास्ताः प्रत्यनन्दत ॥ २६ ॥
स्पृष्ट्वा स्पृष्ट्वा च ताः कन्याः कुशनाभं प्रशस्य च ॥२७॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बाल-
काण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

स राजा वायुना मुक्ता दृष्ट्वेत्यन्वयः भग्ना इति पाठस्तु चिन्त्यः किन्तु तत्पाठे पूर्वं भग्ना इति व्याचख्युः ॥ २४ ॥

प्रेषयामास काम्पिल्यं प्रतीति शेषः ॥ २५ ॥

सदृशीं क्रियां दारक्रियामित्यर्थः प्रति नन्दनप्रकारमाह स्पृष्ट्वे-
त्यादि प्रशस्य च गतेत्यर्थः आश्चर्यं भाग्यातिशयं यद्देव श्रेष्ठलाभादरः [illegible]
धन्योऽयं राजा यस्य कन्या ईदृश्यः अहो मे भाग्यं यस्या मे ईदृश्यः
स्नुषाः इत्येवं प्रति नन्दनं अनेन स्त्रीमाहात्म्यं तपो माहात्म्यञ्च
दर्शितम् ॥ २६ ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदि-
काव्ये बालकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

## चतुस्त्रिंशः सर्गः

ततोद्वाहे गते तस्मिन् ब्रह्मदत्ते च राघव ! ।
अपुत्रः पुत्रलाभाय पौत्रीमिष्टिमकल्पयत् ॥ १ ॥
इष्ट्यां तु वर्तमानायां कुशनाभं महीपतिम् ।
उवाच परमोदारः कुशो ब्रह्मसुतस्तदा ॥ २ ॥
पुत्रस्ते सदृशः पुत्र ! भविष्यति सुधार्मिकः ।
गाधिं प्राप्स्यसि तेन त्वं कीर्तिं लोके च शाश्वतीम् ॥ ३ ॥
एवमुक्त्वा कुशो राम ! कुशनाभं महीपतिम् ।
जगामाकाशमाविश्य ब्रह्मलोकं सनातनम् ॥ ४ ॥
कस्यचित्त्वथ कालस्य कुशनाभस्य धीमतः ।
जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः ॥ ५ ॥
स पिता मम काकुत्स्थ ! गाधिः परमधार्मिकः ।
कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन ! ॥ ६ ॥

---

ब्रह्मदत्ते चेति चस्त्वर्थः कन्या शतकन्यायार्थी वा पुत्रलाभाय पुत्रप्राप्तये ॥ १ ॥

कुशः कुशनाभ पिता ॥ २ ॥ कुशनाभमाह पुत्र इत्यादि सदृशस्त्वत्सदृशः कोऽसौ तत्राह गाधिं गाधिनामानं प्राप्स्यसि तेन लोके शाश्वतीं कीर्त्तिञ्च प्राप्स्यसि ॥ ३ ॥

कुशो नामेति पाठे एतत्कुशवृत्तं नाम प्रसिद्धमित्यर्थः आकाशमाविशत् आकाशरूपो भूत्वा अनेन तस्य उच्चत्वं सूचितं तेन स्ववंशस्य माहात्म्यातिशयः सूचितः ॥ ४ ॥

कस्यचित्त्वथ कालस्य कस्यचित्कालस्य अनन्तरमित्यर्थः ॥ ५ ॥

मम पितामहस्य कुशवंशप्रसूतत्वादहं कौशिकः ॥ ६ ॥

पूर्वजा भगिनी चापि मम राघव ! सुव्रता ।
नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥ ७ ॥
सशरीरा गता स्वर्गं भर्तारमनुवर्तिनी ।
कौशिकी परमोदारा प्रवृत्ता च महानदी ॥ ८ ॥
दिव्या पुण्योदका रम्या हिमवन्तमुपाश्रिता ।
लोकस्य हितकार्यार्थं प्रवृत्ता भगिनी मम ॥ ९ ॥
ततोऽहं हिमवत् पार्श्वे वसामि नियतः सुखम् ।
भगिन्यां स्नेहसंयुक्तः कौशिक्यां रघुनन्दन ! ॥ १० ॥
सा तु सत्यवती पुण्या सत्ये धर्मे प्रतिष्ठिता ।
पतिव्रता महाभागा कौशिकी सरितां वरा ॥ ११ ॥
अहं हि नियमाद्राम ! हित्वा तां समुपागतः ।
सिद्धाश्रम मनुप्राप्तः सिद्धोऽस्मि तव तेजसा ॥ १२ ॥

---

न केवलमहमेव गाधेः पुत्रः मम पूर्वजा ज्येष्ठा नाम्ना सत्यवतीति प्रसिद्धा ऋचीके प्रतिपादिता ऋचीकाय दत्ता इति नाम प्रसिद्धम् ॥ ७ ॥

सशरीरं स्वर्गं गते हेतुर्भर्तारमनुवर्तिनीति सहगमनं कृतवतीत्यर्थः अपिच अन्यदपि तस्याश्चरितं कौशिकी नाम्नी महानदी तद्रूपा प्रवृत्ता च जाता ॥ ८ ॥

हितकार्यार्थं हितकामार्थमिति पाठे हितं आमुष्मिकं कामः ऐहिकं तदुभयदानार्थम् ॥ ९ ॥

यतो भगिन्यां स्नेहसंयुक्तः अतः हिमवत्पार्श्वे कौशिक्यां नियतः नित्यं सुखं वसामीत्यन्वयः ॥ १० ॥

इत उ तस्यां वास इत्याह सात्विति सत्ये धर्मे प्रतिष्ठिता सत्यभा-षणादिना सत्याद्धर्मो न निवर्तत इति भावः ॥ ११ ॥

तन्वेवं कथं सिद्धाश्रमे स्थितिरत आह अहं हीति नियमात्

एषा राम ! ममोत्पत्तिः स्वस्य वंशस्य कीर्त्तिता ।
देशस्य हि महाबाहो ! यन्मात्त्वं परिपृच्छसि ॥ १३ ॥
गतोऽर्धरात्रः काकुत्स्थ ! कथाः कथयतो मम ।
निद्रामभ्येहि भद्रन्ते माभूद्विघ्नोऽध्वनीह नः ॥ १४ ॥
निष्पन्दास्तरवः सर्वे निलीना मृगपक्षिणः ।
नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन ! ॥ १५ ॥
शनैर्वियुज्यते सन्ध्या नभो नेत्रैरिवावृतम् ।
नक्षत्रतारागहनं ज्योतिर्भिरवभासते ॥ १६ ॥
उत्तिष्ठते च शीतांशुः शशी लोकतमोनुदः ।
ह्लादयन् प्राणिनां लोके मनांसि प्रभया स्वया ॥ १७ ॥

---

मया पिण्डदानवत् विद्यात्मकैक साध्ययागजन्यसिद्धि हेतोः आगमन-कार्यस्य त्वदनुग्रहात् सिद्धमित्याह सिद्धाश्रममित्यादि ॥ १२ ॥

उपसंहरति एषेति मम गाधेः सकाशादुत्पत्तिः कीर्त्तिता स्वस्य वंशस्य उत्पत्तिः ब्रह्मपुत्रात् कुशात् कीर्तिता देशस्य शोणाकूलीय गिरि व्रज देशस्य पृच्छसि पर्यपृच्छः तत्सर्वमुक्तमिति शेषः ॥ १३ ॥

अतःपरं न प्रष्टव्यमित्याह गत इति विघ्नः गन्तव्या ध्वनि निद्राभावप्रयुक्त आलस्यमूलः ॥ १४ ॥

अर्धरात्रचिह्नान्याह निष्पन्दा इति पक्षिचलनाभावादिति भावः तदाह निलीना इति ॥ १५ ॥

शनैर्वियुज्यते वियुक्तेत्यर्थः वर्तमानसामीप्ये भूते लट् सन्ध्या-शब्देन तदुपासनयोग्य गौणकालराहित्येन सार्धयामरूपः नक्षत्र तारा गहनं नभः सहस्राक्षवत् नेत्रैरावृतमिव तत्ज्योतिर्भिः तद्रश्मिभिः अव-भासते ॥ १६ ॥

उत्तिष्ठते उदोनूर्ध्व कर्मणि इति तङ् ॥ १७ ॥

नैशानि सर्वभूतानि प्रचरन्ति ततस्ततः ।
यक्ष राक्षस सङ्घाश्च रौद्राश्च पिशिताशनाः ॥ १८ ॥
एवमुक्त्वा महातेजा विरराम महामुनिः ।
साधु साध्विति ते सर्वे मुनयो ह्यभ्यपूजयन् ॥ १९ ॥
कुशिकानामयं वंशो महान् धर्मपरः सदा ।
ब्रह्मोपमा महात्मानः कुशवंश्या नरोत्तमाः ॥ २० ॥
विशेषेण भवानेव विश्वामित्र ! महायशः ।
कौशिकी सरितां श्रेष्ठा कुलोद्योतकरी तव ॥ २१ ॥
मुदितैर्मुनिशार्दूलैः प्रशस्तः कुशिकात्मजः ।
निद्रामुपागमच्छ्रीमानस्तं गत इवांशुमान् ॥ २२ ॥
रामोऽपि सहसौमित्रिः किञ्चिदागतविस्मयः ।
प्रशस्य मुनिशार्दूलं निद्रां समुपसेवते ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बाल-
काण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

---

नैशानि निशा प्रभवानि तान्येवाह यक्षेत्यादि ॥ १८ ॥

अभ्यपूजयन् अस्तुवन् ॥ १९ ॥ स्तुतिप्रकारमाह कुशिकानाम-
मित्यादि ब्रह्मोपमाः ब्रह्मर्षितुल्याः ॥ २० ॥

हे महायशो विश्वामित्र ! भवानेव विशेषेण महात्मेति शेषः यत्त्व-
मेवा ब्राह्मणत्वं प्राप्त इति भावः किञ्च यस्य तव भगिनी तव कुलस्य
द्योतकरी उद्धारकर्त्री सरितां श्रेष्ठा अनेन सकल जगदुद्धारकत्वं
सूचितम् ॥ २१ ॥

प्रशस्तः स्तुतः अस्तं गत इवांशुमानिति पाठः ॥ २२ ॥

सेवते सेवतेस्म ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदि-
काव्ये बालकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः

उपास्य रात्रिशेषन्तु शोणाकूले महर्षिभिः ।
निशायां सुप्रभातायां विश्वामित्रोऽभ्यभाषत ॥ १ ॥

सुप्रभाता निशा राम ! पूर्वा सन्ध्या प्रवर्त्तते ।
उत्तिष्ठोत्तिष्ठ भद्रन्ते गमनायाभिरोचय ॥ २ ॥

तच्छ्रुत्वा वचनं तस्य कृत पूर्वाह्णिकक्रियः ।
गमनं रोचयामास वाक्यं चेदमुवाच ह ॥ ३ ॥

अयं शोणः शुभजलोऽगाधः पुलिनमण्डितः ।
कतरेण पथा ब्रह्मन् ! सन्तरिष्याम हे ! वयम् ॥ ४ ॥

एवमुक्तस्तु रामेण विश्वामित्रोऽब्रवीदिदम् ।
एष पन्थामयोद्दिष्टो येन यान्ति महर्षयः ॥ ५ ॥

ते गत्वा दूरमध्वानं गतेऽर्धदिवसे तदा ।
जाह्नवीं सरितां श्रेष्ठां ददृशुर्मुनिसेविताम् ॥ ६ ॥

तां दृष्ट्वा पुण्यसलिलां हंससारससेविताम् ।
बभूवुर्मुनयः सर्वे मुदिताः सहराघवाः ॥ ७ ॥

तस्यास्तीरे तदा सर्वे चक्रुर्वासपरिग्रहम् ।
ततः स्नात्वा यथान्यायं सन्तर्प्य पितृदेवताः ॥ ८ ॥

---

रात्रिशेषं उपास्य निद्रया अतिवाह्य ॥ १ ॥

गमनाय गमनं कर्तुम् ॥ २ ॥ ३ ॥ अयं शोण इति शोणैव शोण इति अपदिष्टः कतरेण पथा सन्तरिष्यामहे इत्यन्वयः प्रश्न बीजमगाध इति अतलस्पर्श इत्यर्थः ॥ ४ ॥

उद्दिष्टः गन्तव्यत्वेन निश्चितः ॥ ५ ॥ ६ ॥ सारसः पक्षिविशेषः॥७॥

वासपरिग्रहं सम्मार्जनादिना आवासस्थानं चक्रुरित्यर्थः ॥ ८ ॥

हुत्वा चैवाग्निहोत्राणि प्राश्य चामृतवद्धविः ।
विविशुर्जाह्नवीतीरे शुभा मुदितमानसाः ॥ ९ ॥
विश्वामित्रं महात्मानं परिवार्य समन्ततः ।
विष्ठिताश्च यथान्यायं राघवौ च यथार्हतः ।
सम्प्रहृष्टमना रामो विश्वामित्रमथाब्रवीत् ॥ १० ॥
भगवञ्छ्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम् ।
त्रैलोक्यं कथमाक्रम्य गता नदनदीं पतिम् ॥ ११ ॥
चोदितो रामवाक्येन विश्वामित्रो महामुनिः ।
वृद्धिं जन्म च गङ्गाया वक्तुमेवोपचक्रमे ॥ १२ ॥
शैलेन्द्रो हिमवान् राम ! धातूनामाकरो महान् ।
तस्य कन्याद्वयं राम ! रूपेणाप्रतिमं भुवि ॥ १३ ॥
या मेरुदुहिता राम ! तयोर्माता सुमध्यमा ।
नाम्ना मेना मनोज्ञा वै पत्नी हिमवतः प्रिया ॥१४॥
तस्यां गङ्गेयमभवत् ज्येष्ठा हिमवतः सुता ।
उमा नाम द्वितीयाभूत्कन्या तस्यैव राघव ! ॥ १५ ॥

---

अमृतवत् अमृततुल्यं यज्ञशिष्टत्वादिति। यद्वा अमृतवत् मधुरं गव्याज्यं हविः प्राशुक्तं प्राशितमित्यर्थः ॥ ९ ॥

विष्ठिताः विशेषेण स्थिताः यथार्हतः यथावस्थानमर्हतस्तथा स्थिता-वित्यर्थः ॥ १० ॥

गङ्गां श्रोतुं गङ्गाविषयकं किञ्चिच्छ्रोतुमित्यर्थः श्रोतव्यं विषयमाह त्रैलोक्यमित्यादि ॥ ११ ॥

वृद्धिं त्रैलोक्यव्याप्तिरूपाम् ॥ १२ ॥

धातूनां स्वर्णादीनाम् ॥ १३ ॥ या मेरुदुहिता मेना नाम सा तयोः कन्ययोर्मातेत्यन्वयः ॥ १४ ॥

अथ ज्येष्ठां सुराः सर्वे देवकार्यचिकीर्षया।
शैलेन्द्रं वरयामासुर्गङ्गां त्रिपथगां नदीम्॥ १६ ॥
ददौ धर्मेण हिमवांस्तनयां लोकपावनीम्।
स्वच्छन्दपथगां गङ्गां त्रैलोक्यहितकाम्यया॥ १७ ॥
प्रतिगृह्य त्रिलोकार्थं त्रिलोकहितकाङ्क्षिणः।
गङ्गामादाय तेऽगच्छन् कृतार्थेनान्तरात्मना॥ १८ ॥

---

तस्यां मेनायां या ज्येष्ठा हिमवतः सुता कुटिला नाम सा इयं गङ्गाऽभवदित्यर्थः तस्यैव हिमवतः ॥ १५ ॥

देवकार्यञ्च वक्ष्यमाणं भववीर्यधारणं त्रिपथगां स्वर्गभूपातालमार्गगामिदं वर्तमानापदेशेन वरणं चास्याः शिवभार्यात्वाय ॥ १६ ॥

धर्मेण कन्यादानधर्मेण स्वच्छन्दपथगामित्यपि वर्तमानापदेशेन स्वेच्छामात्रेण प्रवहादिवायुमार्गगमनशीलाम् ॥ १७ ॥

त्रिलोकार्थं तारकतो भीत त्रिलोक रक्षक पुत्रोत्पत्त्यर्थं अगच्छन् ब्रह्मलोकं तत्र ब्रह्मशापवशाज्जलरूपता प्राप्तिरितीत्यादि वामन पुराणोक्त दिशा मध्ये जह्नुं वामन पुराणवृत्तान्तस्य प्रायेणात्र प्रत्यभिज्ञानात् एवं हि तत्राख्यायिका उमा ज्येष्ठा कुटिला नाम हिमवत्कन्या देवैः शिववीर्यधारणाय हिमवन्तं प्रार्थिता तेन दत्तया तया सह देवा ब्रह्मलोकं गत्वा ब्रह्मणे निवेदितवन्तः ब्रह्मणा चासमर्थेयं तद्धारणे इत्युक्ताऽवश्यं धारयामीति कथितवाक्याऽवज्ञानेन ब्रह्मणा जलरूपा भवेति शप्ता तत्रैव ब्रह्माण्डोर्ध्व कटाहे जलरूपेण लग्नास्थिता तस्यामेवाग्निना शिववीर्यं क्षिप्तमिति विष्णुं क्रमणा प्रसरता कटाहे भेदिते छिद्रात् कुटिला विष्णुपादान्तात् पपाता क्षुभिता ततः तस्याः विष्णुपदी
। ब्रह्माण्डो र्ध्वं कटाहे लग्नेति ज्ञायते
पतनसमये च ब्रह्माण्ड बाह्य जलेन सहैव पतितं तज्जलं ब्रह्मणा कमण्डलु धृतं बाह्य जलं च शिवानन्दवाक्प्रकाशं नाराज्ञ्यात्मकमिति कालिका संहितादौ स्पष्टं ततोभगवता पदारोपणे तेनैव कमण्डलुः

या चान्या शैलदुहिता कन्यासीद्रघुनन्दन !।
उग्रं सुव्रतमास्थाय तपस्तेपे तपोधना ॥ १९ ॥
उग्रेण तपसा युक्तां ददौ शैलवरः सुताम् ।
रुद्रायाप्रतिरूपाय उमां लोकनमस्कृताम् ॥ २० ॥
एते ते शैलराजस्य सुते लोकनमस्कृते।
गङ्गा च सरितां श्रेष्ठा उमा देवी च राघव ! ॥२१॥
एतत्ते सर्वमाख्यातं यथा त्रिपथगामिनी ।
खङ्गता प्रथमं तात ! गतिं गतिमतां वर ! ॥ २२ ॥
सुरलोकं समारूढा विपापा जलवाहिनी ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

जलेन तत्पादप्रक्षालनं कृत्वा तज्जलं कमण्डलावेव क्षिप्तं शङ्कर संहितोक्तरीत्या गौरी विवाहोत्तरं लीलया गौर्य्या पाणिभ्यां शिवनयनाच्छादने कृते शिवेन ललाट नेत्रं प्रकाशितं ततो भयाद्गौरी पाणि स्वेदजलं च्युतं तदपि ब्रह्मणा कमण्डलौ स्थापितमित्यप्युक्तोहि गौरी विवाहप्रसङ्गेन सूचितश्च भगीरथप्रार्थनया च ब्रह्मरूपः सर्वपवित्रजलसमूहस्यैव द्रवः सर्वमुक्त जलमुपक्रम्य पुराणेषु भगीरथसम्बन्धश्रवणात् विस्तरस्तत्रकृत गङ्गा माहात्म्य प्रकाशे द्रष्टव्यः ॥ १८ ॥

कन्या अदत्तपतिः अग्रे शिववीर्यस्खलनादि वस्तु चैतद्दर्शनं उग्रं व्रतं पर्णभोजनस्यापि त्याग सङ्कल्परूपं तपः शिवध्यानरूपम् ॥१९॥२०२

यथा त्रिपथगामिनी गङ्गा तथा प्रतिपादयामीति शेषः तदेव विवृणोति खमित्यादि प्रथमं खङ्गता आकाशमार्गकृता ॥ २२ ॥

पश्चात् सुरलोकं समारूढाऽभवत् जलवाहिनी ततस्वभावा जाता विपापा सकलपापहन्त्री ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥